

राष्ट्रिय
संस्कृत
संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ११ ॥

# वाणीविलसितम्

द्वितीया भङ्गी



**Rashtriya Sanskrit Sansthan**

*( Under the auspices of the Ministry of Education and Culture, Govt. of India )*

**Delhi**

**Ganganatha Jha Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**

*General Editor*

**Dr. G. C. Tripathi**

# No. 11

# VĀṆĪVILASITAM

## SECOND PART

**( An anthology of Sanskrit Poems of 23 contemporary poets )**

*Edited by*

Dr. Jagannath Pathak




ALLAHABAD
1981

राष्ट्रियसंस्कृतसंस्थानम्

( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )

दिल्ली



# गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

डॉ० गयाचरण त्रिपाठी



एकादशं प्रसूनम्

# वाणीविलसितम्

द्वितीया भङ्गी

सम्पादकः

जगन्नाथ पाठकः



गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

मोतीलाल नेहरू पार्क

प्रयाग-२

# वाणीविलसितम्

## द्वितीया भङ्गी

विद्यापीठे २०३७ तमस्य वैक्रमीयाब्दस्य मधुमासि समायोजिते
संस्कृतकविसम्मेलने पठितानां, अन्येषां च कतिपयपद्यानां, सङ्कलनम्

सम्पादकः

**डॉ० जगन्नाथ पाठकः**



गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
प्रयागः-२



१९८१

## उपन्यासः

भारतं ह्यस्माकं विस्मयानां खनिश्चमत्कृतीनां च जनिस्थली। यन्नामान्यत्र न दृश्यते नापि श्रूयते तदत्रोपलभ्यते । विश्वस्मिञ्जगति न कियत्यो भाषाः प्रादुर्भूय तिरोदधुस्तासां साहित्यं चोन्मज्य निलीनं, परमस्मिन्नेव देशे वैदिककालात् प्रभृति अद्ययावन्निलिम्पवाणी तत्साहित्यं च वरीवर्त्ति, अनुदिनमेधिष्णुतां च याति । ऋग्वेदीयैः स्वयंभूभिर्मनीषिभिऋ॑षि-कविभिर्यत्काव्यं परायाः स्वकीयधिषणया प्रखरया वैखरीभूमिकायामिहावतारितं तत्स्रोतोऽद्यापि न शुष्कम् । अविच्छिन्नतया तस्य मधुमयी धारा वैदेशिकशासनाग्निना प्रतप्ते बहुविधदुरितपाषाणबालुकामयेऽपि कालमार्गे शरद्याश्यानपुलिना निर्मलसलिला सरिदिव मन्दं मन्दं सरन्ती "पश्य देवस्य काव्यं न ममार न जीर्यति" इति श्रुतिवचनमनुसरन्ती तदेव सत्यापयन्ती चाद्यापि सांसारिकतापाभिदग्धान् जनान् काव्यरसाभिगृध्नूनि सहृदयहृदयानि च समाश्वासयति, संतर्पयति, सम्प्रीणयति ।

२०३५ तमस्य वैक्रमीयाब्दस्य वाग्देवीवरिवस्यावरेण्ये वसन्तोत्सवेऽस्माभिर्वाराणसीप्रयागमण्डलयोरग्रेसरसंस्कृतकवीनामनिर्बन्धसाहाय्येन कविसम्मेलनमेकमायोजितमासीत् । सम्मेलने क्षरितः काव्यरसोऽस्माभिर्‘वाणीविलसित’मित्याख्यपुस्तकपुटे सञ्चित्य रसज्ञानां पुरः परिवेशितोऽभवत् । एतत्काव्यं गायं गायं श्रावं श्रावं पाठं पाठं च सहृदया उन्मत्तीभूयास्मान् पुनरप्येतादृङ् नूतनकाव्यसमारम्भसमायोजनायान्वरुन्धन् । १९८०-८१ तमेशवीयवर्षात्मकं शैक्षणिकं सत्रं राष्ट्रियसंस्कृतसंस्थानेन ‘संस्कृत-संस्कृति’वर्षरूपेण मानयितुं समुद्घुष्टं समादिष्टं

चासीदित्येतद्व्याजमादायैषमोऽस्माभिः पुनरपि वसन्तर्तौ बृहत्येका कविगोष्ठी समायोजिता, यस्यामस्मिन्नवसरे न केवलमत्रत्या काश्याश्चापि तु वित्तसाधनानुरूपं यथासामर्थ्यञ्च सर्वाभ्य एव दिग्भ्यो भारतभूमेः कवयः आहूताः । आमन्त्रितेषु समुपस्थातुं पारयद्भिः कविभिर्गोष्ठ्यां यः काव्यरसासारः प्लावितः स एव रसौघः क्वचिदन्यतोऽपि तस्मिन् समुच्छल्य निपतिताः केचनापरे च सुधाबिन्दवोऽस्माभिर्गोष्पदीकृत्य ग्रन्थचषकेऽस्मिन् रसिकानां पानार्थं समुपस्थापिताः ।

यद्यपि समस्तस्य वाङ्मयस्य 'वाङ्'-मयत्वं स्वत एव सिद्धं किन्तु साहित्यं नाम वाग्देव्या विशिष्टमेव विलसितरूपम् । कीदृशी सैषा कविताकामिनी, कीदृशी चैतस्या इयं द्वितीया भङ्गी इति भवन्त एव निभालयन्तु निर्धारयन्तु च । वयं तु 'कन्यापक्षीया' इत्यत्र किञ्चिदपि ब्रुवन्तो लज्जामहे ।

पर्यन्ते, 'कापिशायनी'-प्रभृत्यनेकविधमधुनिष्यन्दिकाव्यग्रन्थान् विरच्य पण्डितराजायमानेभ्यः श्रीमद्भ्यो जगन्नाथपाठकमहोदयेभ्यो बहून् साधुवादान् वितरामि यदेते पुस्तिकामिमां सादरं, सायासं, सबहुमनोयोगं संपाद्य, परिशोध्य, मुद्राप्य च सहृदयेभ्यः समुपायनीकृतवन्तः ।

विदुषामाश्रवः
गयाचरणस्त्रिपाठी
प्राचार्यः

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
भाद्रपदपूर्णिमा, २०३८ वै०



# सम्पादकीयम्

काव्यसङ्ग्रहरूपस्यास्य 'वाणीविलसितस्य' द्वितीयोऽयं 'भङ्गी'त्याख्यो भागः, मार्चमासस्य ('८१) सप्तमतारिकायां विद्यापीठेऽस्मिन् दिल्लीस्थ-'राष्ट्रियसंस्कृतसंस्थानेन' प्रवर्तितस्य संस्कृतसंस्कृतिवर्षस्याङ्गतया समायोजितस्याखिलभारतीयस्य संस्कृतकविसम्मेलनस्य परिपक्वं सुमधुरं फलम्। इतः पूर्वं, १९७८ ख्रिस्ताब्दे वाराणसीप्रयागयोः कतिपय-विशिष्टकवीनां प्रतिनिधिपद्यानां सङ्कलनं प्रथमभागरूपेण प्राकाश्यमानीतम्। सम्मेलनस्यास्य वैशिष्ट्यमित्थतैव प्रमाणीभूतं यदिदमैकदेशिकं प्रादेशिकं वा नासीत्। अस्मिन्नस्माकमभ्यर्थनामङ्गीकृत्य गीर्वाणवाण्या लब्धप्रतिष्ठा नैके सुकवयः समागत्य सहृदयान् स्वकीयाभिर्भङ्गीभणितिभिरनुरञ्जितवन्तः। सम्मेलनस्याध्यक्ष्यं निर्व्यूढं समधिकप्रतिभानशालिभिः सुकविमूर्धन्यैः डॉ० श्रीधरभास्करवर्णेकर महाशयैः, नागपुर-विश्वविद्यालयस्य संस्कृतविभागस्य भूतपूर्वाध्यक्षैः।

प्रवर्तमाने युगे संस्कृतकवयः कियन्मात्रं भारत-राष्ट्रस्य वर्तमानां स्थितिं भारतीयानां जीवनसङ्घर्षञ्चाभिलक्ष्य जागरूका इति सङ्कलनमिदं यत्किंचित् सङ्केतयितुं प्रभवेत्। सर्वथा विषयेऽस्मिन् काव्यानुशीलनाभ्यासविशदीभूतान्तःकरणभाजः सहृदया एव प्रमाणम्। कतिपय-प्रदत्तसमस्यानां पूर्तिभिः सह स्वातन्त्र्येण श्राविततैरपि पद्यैः समग्रतामानीतं सम्मेलनं सुकविभिः।

विभिन्नकारणवशाद् येषामनुपस्थित्या वयं वञ्चितास्तेषु प्राधान्येन समुल्लेख्याः सन्ति मान्याश्चिन्तामणिद्वारकानाथदेशमुखमहाशयाः (भारतस्य भू० पू० वित्तमन्त्रिणः), महीयसी महादेवी वर्मा, राष्ट्रिय-संस्कृतसंस्थानस्य निदेशकाः डॉ० रामकरणशर्ममहाशयाः, कविरत्न-श्रीमदमीरचन्द्रशास्त्रिणः श्रीमदानन्दझा महाशयाः, श्री पं० चित्त-गुडवरदाचार्यमहाभागाश्च।

सत्यप्येवं समुपस्थितैः सुकविभिः श्रावितैः पद्यैः प्रवर्तमानायाः संस्कृतकाव्यधाराया गतिशीलत्वमाकलयितुं शक्यत एव। संस्कृतकवीनामाधुनिकानां भङ्गीभणितयो न केवलं वैचित्र्येणालौकिकचमत्कारकारिणा समुल्लसन्ति, परं तत्र हासव्यङ्ग्यपरिकलितं वैविध्यमपि समुन्नेतुं प्रभवामः। एवं वाणीविलसितस्य द्वितीयभागरूपेण प्रस्तूयमानोऽयं काव्यसङ्ग्रहः कियदवधि प्रासङ्गिकः सचेतोजनचेतसाञ्च कियन्मात्रमनुरञ्जकश्चेति काव्यज्ञा एव प्रमाणम्।

प्रसङ्गेऽस्मिन् यदि दिल्लीस्थराष्ट्रियसंस्कृतसंस्थानस्य मान्या निदेशकाः डॉ० रामकरणशर्माणो न स्मर्यन्ते तदाऽस्य वक्तव्यस्य सुमहदपूर्णत्वं स्यादिति मत्वा तान् प्रति विशेषमाभारं विनिवेदयामः। अनुपस्थितैरपि तैः स्वकीयेन शुभकामनाकलितेन प्रोत्साहनेन वयमनुगृहीताः।

यैश्च कविभिरस्माकमस्मिन् साहित्याध्वरे स्वयमागत्य स्वकाव्यप्रेषणद्वारा च सहयोगः कृतस्तेषां प्रति हृदयेन धन्यवादान् वितरामः। अस्मिन् भागे पूर्ववत् कवीनां कोऽपि क्रमो नावलम्बितोऽस्माभिः।

सम्प्रति, हृदयेन कविभ्यो बुद्ध्या च काव्यविवेचकेभ्यो विद्यापीठस्य प्राचार्येभ्यः डॉ० गयाचरणत्रिपाठिभ्य इदं धन्यवादज्ञापनमौपचारिकमिव प्रतिभाति, येषां गुणगृध्नुत्वस्य सुमहत उत्साहस्य च प्रभावेण बहूनां सुकविवर्याणां सहृदयधुरीणानाञ्च समुपस्थित्या वयमुत्साहिताः।

यत्र तत्र मुद्रणान्ते दृष्टिपथमुपयातानां त्रुटीनां कृते वयं लज्जिताः। कृपया विद्वांसः सहृदयाश्च संशोधनमपि कृत्वा पठिष्यन्ति।

शाकुन्तलमुद्रणालयस्याधिपतयः श्री उपेन्द्रत्रिपाठिनो धन्यवादार्हाः, यैरस्य मुद्रणं तत्परतया विहितम्।

जगन्नाथ पाठकः



सत्यप्येवं समुपस्थितैः सुकविभिः श्रावितैः पद्यैः प्रवर्तमानायाः संस्कृतकाव्यधाराया गतिशीलत्वमाकलयितुं शक्यत एव। संस्कृतकवीनामाधुनिकानां भङ्गीभणितयो न केवलं वैचित्र्येणालौकिकचमत्कारकारिणा समुल्लसन्ति, परं तत्र हासव्यङ्ग्यपरिकलितं वैविध्यमपि समुन्नेतुं प्रभवामः। एवं वाणीविलसितस्य द्वितीयभागरूपेणप्रस्तूयमानोऽयं काव्यसङ्ग्रहः कियदवधि प्रासङ्गिकः सचेतोजनचेतसाञ्च कियन्मात्रमनुरञ्जकश्चेति काव्यज्ञा एव प्रमाणम्।

प्रसङ्गेऽस्मिन् यदि दिल्लीस्थराष्ट्रियसंस्कृसंस्थानस्य मान्या निदेशकाः डॉ० **रामकरणशर्माणो** न स्मर्यन्ते तदाऽस्य वक्तव्यस्य सुमहदपूर्णत्वं स्यादिति मत्वा तान् प्रति विशेषमाभारं विनिवेदयामः। अनुपस्थितैरपि तैः स्वकीयेन शुभकामनाकलितेन प्रोत्साहनेन वयमनुगृहीताः।

यैश्च कविभिरस्माकमस्मिन् साहित्याध्वरे स्वयमागत्य स्वकाव्यप्रेषणद्वारा च सहयोगः कृतस्तेषां प्रति हृदयेन धन्यवादान् वितरामः। अस्मिन् भागे पूर्ववत् कवीनां कोऽपि क्रमो नावलम्बितोऽस्माभिः।

सम्प्रति, हृदयेन कविभ्यो बुद्ध्या च काव्यविवेचकेभ्यो विद्यापीठस्य प्राचार्येभ्यः **डॉ० गयाचरणत्रिपाठिभ्य** इदं धन्यवादज्ञापनमौपचारिकमिव प्रतिभाति, येषां गुणगृध्नुत्वस्य सुमहत उत्साहस्य च प्रभावेण बहूनां सुकविधुर्याणां सहृदयधुरीणानाञ्च समुपस्थित्या वयमुत्साहिताः।

यत्र तत्र मुद्रणान्ते दृष्टिपथमुपयातानां त्रुटीनां कृते वयं लज्जिताः। कृपया विद्वांसः सहृदयाश्च संशोधनमपि कृत्वा पठिष्यन्ति।

शाकुन्तलमुद्रणालयस्याधिपतयः श्री उपेन्द्रत्रिपाठिनो धन्यवादार्हाः, यैरस्य मुद्रणं तत्परतया विहितम्।

**जगन्नाथ पाठकः**



# अनुक्रमणिका

# वाग्वन्दनम्

वायुर्वाति न भाति वासरमणिश्चन्द्रो न विद्योतते[1]
यत्रास्ते न मनोगति[2]स्तदखिलं पश्यन्ति सत्सूरयः[3] ।
यस्याः प्राप्य कृपाकणं करधृतं धात्रीफलं स्याद्यथा[4]
सा कण्ठाम्बुजवासिनी भगवती वागीश्वरी पातु नः ॥

—[स्व०] त्रिपाठिनो रामशरणस्य

---

अत्रेमाः श्रुतयोऽनुसन्धेयाः—

१. न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति ॥

२. यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मनसा न मनुते ।

३. तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥

४. कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधात्.... ।

कवेः परिचयोऽधस्तात् (१२४ तमे पृष्ठे) दत्तोऽस्ति ।



सुकवीनां सहृदयानाञ्च स्वागतं कवितया व्याहरन्तो विद्यापीठस्य
प्राचार्याः डॉ० गयाचरणत्रिपाठिनः



# प्राचार्यस्य स्वागतवचांसि

कियत्पुण्यमथास्माभिः सञ्चितं पूर्वजन्मनि ।
एतावतां विदां प्राप्तं यदेकत्रैव दर्शनम् ॥१॥

विस्मृतः समुदाचारो विस्मृताः प्रणतिक्रियाः ।
विधेयं विस्मृतं सर्वमात्माऽपि खलु विस्मृतः ॥२॥

आनन्दोद्रेकसंभिन्ना आह्लादैकस्वरूपिणः ।
सुखं मोदैकवेद्यं यन् मन्ये तद् विद्महे वयम् ॥३॥

आविष्टा भक्तिभावेन कार्तज्ञ्येन च भाविताः ।
बद्ध्वाञ्जलिं भवत्पादान् पुण्यान् वन्दामहे वयम् ॥४॥

एवमेव कृपाऽस्मासु विधेयेषु विधीयताम् ।
उदारचरितैर्विद्भिर्भवद्भिः कवितल्लजैः ॥५॥
अनुग्राह्याश्च सत्काव्यमाधुरीगृध्नवो वयम् ।
काले काले समागत्य साहित्यामृतबिन्दुभिः ॥६॥

धन्येयं परिषद् विरञ्चिरमणीलीलासु बद्धादरा
विद्वत्पादरजोविभूषितमिदं पीठं च धन्यं महत् ।
लब्ध्वा धन्यतरा प्रयागनगरी सारस्वतं वैभवं
धन्याः स्मो रसलोलुपास्तु यदहो जातो भवत्सङ्गमः ।।

वीणापाणिप्रियतमततैः पाविते यज्ञजालै-
र्वार्भिर्गङ्गातरणिसुतयोः क्षालितान्तर्मलौघे ।
पुण्यक्षेत्रे सुचरितफलं तीर्थराजे बुधानां
रम्यं वाणीविलसितमिदं को विहातुं समर्थः ? ।।

—त्रिपाठिनो गयाचरणस्य

# त्रिविक्रम पति शर्मा

( जन्मतिथि : २३-१०-१९२९ )

श्री त्रिविक्रम पति शर्माणः प्रयाग विश्वविद्यालयस्य गणितविभागाध्यक्षपद-मलङ्कुर्वन्त्यधुना । एतेषां मातामहमहाशया 'उत्कलमणि' पं० श्री गोपबन्धु दास शर्माणः उत्कलप्रदेशस्य प्रातःस्मरणीया नेतृप्रवरा आसन् । पितृपादाश्च पण्डित-श्री रत्नाकर पति शर्माण उत्कलविश्वविद्यालयान्तर्गतरावेंशमहाविद्यालये दर्शनविभागस्याध्यक्षतया समासीना नानाविधसाहित्यसाधनां कुर्वन्ति स्म ।

आकरोत्तरितरत्नसत्सुतो
गोपबन्धुशुभनप्तृतां वहन् ।
श्रेष्ठकाव्यगणितज्ञ उत्कलः
पत्युपाह्वमहितस्त्रिविक्रमः ॥

## समस्यापूर्तयः

काव्यं रम्यं ललितरचनाच्छन्दसा स्यन्दयन्तीं
चित्रां चित्रोत्खचितवचनां वाचमावाहयन्तीम् ।
दिव्यश्लोकोच्छ्वसितरसनां मोदमैत्रीकषायां
तत्त्वान्वेषी कविपरिषदं को विहातुं समर्थः ॥१॥

यस्यां याता मधुमयफलीभूततां कल्पनायाः
शक्तिः स्निग्धं सुमधुररसास्वादसम्भ्रान्तचेतः ।
सङ्गीतेनापगतमचिरान्मानसं जाड्यजातं
कल्याणीं तां कविपरिषदं को विहातुं समर्थः ॥२॥

अन्तस्तोया वहति तटिनी पूततामादधाना
यत्राध्यात्मोद्वहनकुशला सा सरस्वत्युदारा ।
नूनं तत्रानुभवभवने तीर्थराजे प्रयागे
ज्ञातास्वादः कविपरिषदं को विहातुं समर्थः ॥३॥

गीर्वाणानां कृशपरिणतिस्रोतसा यत्र वाणी
तुल्याऽपि स्यात् सरिदिव दिवः स्वागता दीप्यमाना ।
तत्र त्यागान्वितहरिहराराधनापुण्यपीठे
स्वाङ्गीभूतां कविपरिषदं को विहातुं समर्थः ॥४॥

हित्वा हालां मदनमदिरां कामिनीं कोमलाङ्गीं
विस्मृत्यैकां प्रणयललितां प्रेयसीं प्राणकल्पाम् ।
निःसारं वा ह्यपरिगणयन् माधवे केलिमोदं
रागान्वेषी कविपरिषदं को विहातुं समर्थः ॥५॥

यस्यां कम्रं ललितमधुरं कल्पितं कान्तकान्तं
वाणीलीलायितमतितरां प्रीणयत्यन्तराणि ।
तामासाद्य प्रथितसुषमां बिम्बविन्यासरासै-
रुत्प्रेक्षाभिः कविपरिषदं को विहातुं समर्थः ॥६॥



काव्यपाठाकर्णनदत्तचित्ताः कतिपये मञ्चस्थिताः कवयः

साहित्यानां गहनविपिने मञ्जुकुञ्जाभिरामे
सच्चित्ताध्वव्रजपरिणतः शुद्धचित्तो द्विरेफः ।
काव्यप्रेमाम्बुसुरसरसीफुल्लपङ्केरुहश्रीं
सम्प्राप्यैनां कविपरिषदं को विहातुं समर्थः ॥७॥

शब्दयन्ते मधुरमनिशं वर्हिणां यत्र केका
गङ्गानाथग्रथितमनसां चारुकाव्यव्रतानाम् ।
ग्राम्यं गीतस्वनमपि चिरं निन्दतां वाग्विलासै-
स्तत्रासीनां कविपरिषदं को विहातुं समर्थः ॥८॥

पुरा वेदोक्तानामपि च गदितानां मुनिजनैः
स्थितं मन्त्रीभूतं निगमनियमानां मधुफलम् ।
यदेतस्मिन् काले परिगणितमन्यैः शुभकरं
तदस्माभिस्त्यक्तं न हसितमहो नापि रुदितम् ॥९॥

स्वदेशं स्वातन्त्र्यामृतसलिलसारैः स्नपयितुं
तपः किं वा तप्तं न परमपदैर्नायकवरैः ।
स्वकीयार्थं लुब्धा वयमिह जपामो निरलसं
धनं भोः सर्वस्वं न हसितमहो नापि रुदितम् ॥१०॥

गिरं गीर्वाणानां ललितमधुरोन्मुक्तरचनां
श्रियाऽशेषामोदप्रदनवनवोन्मेषकलया ।
अलङ्कर्तुं कामो यदमितयशाः सत्कविकुलो
मृतेदानीं सा गीर्न हसितमहो नापि रुदितम् ॥११॥

इयं मे कल्याणी परमरमणीयेष्टजननी
वरेण्या कान्तेत्यादरभरितचित्तो यदि धवः ।
दिवा वा रात्रौ वा परिचरवदादेशवशगः
स्वभार्याया भृत्यो न हसितमहो नापि रुदितम् ॥१२॥

कुसंस्कारांस्त्यक्त्वा यदि नवविधानं प्रभवति
विशेषज्ञज्ञानात् क्षरति यदि शक्तिः सरिदिव ।
विकारग्रस्तोऽद्य प्रगतिपरतन्त्रार्थनिकरो
विलुप्तान्तर्दृष्टिर्न हसितमहो नापि रुदितम् ॥१३॥



# अमीरचन्द्र शास्त्री

पञ्चाम्बु (पंजाब) प्रदेशे झङ्ग-मण्डलेऽहमदपुरस्यालनाम्नि ग्रामे १९१८ खिष्टाब्दे सुगृहीतजन्मानः श्रीशास्त्रिणो हरिद्वारस्थे, ऋषिकुलब्रह्मचर्याश्रमे स्व० श्री घूटर झा महोदयानामन्तेवासित्वमधिगतवन्तः। एते खलु सन्ति नानाशास्त्रेष्वविहतगतयो मधुरकोमलकान्तपदावलीनां निर्माणे परममार्मिकाश्च। कविरत्नमित्येषां सार्थकमुपनाम। एतेषां 'गीतिकादम्बरी' शिखरगतायाः कवित्वस्य कीर्तिपताकायाः समुचितं स्थिरञ्चावम्बलनम्।

श्रीशास्त्रिणः 'अधीतमध्यापितमर्जितं यशः' इत्युक्तेः सहजपात्राणि। इदानीं नवदिल्लीस्थश्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठतो गृहीतावकाशा दिल्ल्यां वृन्दावने च निगमकल्पतरोर्गलितस्य फलस्य शुकमुखादमृतद्रवसंयुतस्य श्रीमद्भागवतस्याकलनेन प्रवचनेन च जीवनं सार्थकतां नयन्ति।

कवयत्यमीरचन्द्रे
कवयन्त्यन्येऽपि विमलधियः।
प्रवहति मलयसमीरे
प्रवहन्त्यन्येऽपि वायवो विरलाः॥

## समस्यापूर्तयः

सम्भावितोपस्थितिरित्यहं भव-
त्सम्भावनां सार्थयितुं मनो दधे।
शारीरिकी तु स्थितिरत्र मां मनो-
रथं तमारोढुमयोग्यमातनोत्॥१॥

यावत्प्रयागे प्रथिताः कवीश्वरा
वाणीविलासै रमयन्ति भावुकान् ।
गायन्ति गीतानि च संस्कृतेरमी,
अमीरचन्द्रस्य तु तैर्न सङ्गमः ॥२॥

पद्ये पद्ये साधु साधुध्वनीना-
मभ्युत्थानैर्वर्द्धितोत्साहसौख्यः ।
प्राप्तां वेलां काव्यसम्मेलनस्य
ज्ञातास्वादः को विहातुं समर्थः ॥३॥

अहो वाराणस्या जयपुरपदान्नागपुरतः
सवारङ्गल्वाल्टेयरजनपदात्कानपुरतः ।
गुड्गाव् दिल्लीतः सपदि दरभङ्गादपि समे
समेता श्रोतारः सरससुरवाणीविलसितम् ॥४॥

मया त्वस्मिन् काले विधिपरवशेनेह भवतां
रसज्ञानां ध्यानाधिगतपरमानन्दमहसाम् ।
रसालङ्कारादेः समुदितचमत्कारचयने-
ष्वशक्तेनाप्यद्धा न हसितमहो नापि रुदितम् ॥५॥



## गीतम्

सम्मेलनं कवीनां प्रगतिं चिराय भजताम् ।
उद्बोधनाय लोके स्वगतिं सदा नवयताम् ॥१॥

छन्दोविहीनमेकेऽलङ्कारशून्यमन्ये
काव्येऽप्यकाव्यमितरे रचयन्ति तन्न मन्ये ।
प्रगतिर्न मार्गभङ्गः प्रगतिर्न दुष्टसङ्गः
प्रगतिस्तु संस्कृतत्वं सुतरामितीयमयताम् ॥२॥

आदर्शवादरहितं नहि शोभते यथार्थं
छायापि भाति न पुनर्मुक्त्वा रहस्यसार्थम् ।
रामादिवत्प्रवृत्तिर्न तु रावणादिवदियं,
काव्ये निदर्शिता स्यादधिकाधिका कवयताम् ॥३॥

भवमोक्षतः प्रधानं भुवि धर्मतः प्रधानं,
पुनरेतदत्र कृतिनां क्वचिदर्थतः प्रधानम् ।
काव्यप्रयोजनं तद्गुणभावतोऽपि विलसे-
ज्जनयद्रसस्वदनतो मोदं विदामुदयताम् ॥४॥

लोकोत्तरा निगदिता भुवि वर्णनेह काव्यं
सा मानवेऽपि निदिशेदिह देवभावभव्यम् ।
न तु नग्नता च पशुताऽप्यविवेकिता, विषमता
श्रयतामिह प्रगतितां तदधोगतित्वमयताम् ॥५॥

सुखिदर्शनेऽस्तु मुदिता, न तु कापि वृत्तिरीर्ष्या-
ऽसुखिदर्शनेऽस्तु करुणा, भावो न रोषशीर्षा ।
पुण्येषु भातु मैत्री, न पुनर्नृणामसूया
पापेषु चाप्युपेक्षा, सज्जुगुप्सता न सजताम् ॥६॥

सम्मेलनं कवीनां प्रगतिं चिराय भजताम् ।
उद्बोधनाय लोके स्वगतिं पुनर्नवयताम् ॥७॥

• •

# रुद्रदेव त्रिपाठी

मध्यप्रदेशस्य 'मन्दसौर' नाम्नि नगरे गृहीतजन्मभिः त्रिपाठिवर्यैः 'मालवमयूर' नाम्नः संस्कृतपत्रस्य सम्पादनेन संस्कृतजगति स्पृहणीया ख्यातिर्जिता । सामान्यजनगम्यानां सुमधुरसंस्कृतगीतानां निर्माणेनाधुनिके युगे संस्कृतस्य प्रचारे प्रसारे निरन्तरं निरलसञ्च प्रवृत्ता एते साम्प्रतं नवदिल्लीस्थलालबहादुरशास्त्री केन्द्रीय विद्यापीठेऽध्यापनशोधादिकार्यरताः सन्ति । अनेन 'संस्कृत साहित्य में शब्दालंकार' इति शोधमहाप्रबन्धः सम्प्रस्तुतः । नानाविधव्यङ्ग्यपरिहासप्रचुरकाव्यनिर्माणदक्षतया कविसम्मेलनेष्वेते काव्यपाठन सविशेषं सहृदयानामाकर्षणविषया भवन्ति ।

काव्योद्यानस्वैरमाद्यत्पिकश्री-
गीतिध्वानस्पष्टपीयूषवर्षी ।
उद्यद्रागः कोऽपि जायेत सौम्यः
श्लिष्यन्मुद्रो रुद्रदेवो मुदे वः ॥

## समस्यापूर्तयः

न दैवे विश्वासो भगवति न निष्ठाऽपि सुदृढा
न चाप्यास्था सत्ये नहि मनसि शान्तिः कथमपि ।
तथाऽहन्ताग्रस्तो मदजनितसन्तापविवशो
वृथा भ्रामं भ्रामं विरचयति वाणीविलसितम् ॥१॥

न शब्दा रम्याः स्युर्न भवतु तदर्थेऽपि पटुता
गुणालङ्काराणां स्थितिरपि नहि स्तात् परमहो ।
गिरां देवी यस्मै कृपयति तदीयं विधुरिव
स्फुरज्ज्योत्स्नापूरैर्धवलयति वाणीविलसितम् ॥२॥

प्रयागे श्रीगङ्गातरणितनुजासङ्गमतटे
स्फुरद्बोधं शोधं विदधदमलं शास्त्रमथितम् ।
सुधीगङ्गानाथाभिधमभिनदं संस्कृतगिरा-
मिदं विद्यापीठं विशदयति वाणीविलसितम् ॥३॥

बहूनां पुण्यानां शुभपरिणतेरुज्ज्वलतया
कथञ्चिन्मानुष्यं जननमथ सम्प्राप्य यदि ना ।
जनुःसाफल्यार्थं किमपि न कृतं तेन हि तदा
ध्रुवं संसारेऽस्मिन् न हसितमहो नापि रुदितम् ॥४॥

विशाला पृथ्वीयं सुबहुविशदाः सन्ति गिरयो
विराजन्तेऽनेकाः सरित इह पुण्या अपि पुनः ।
परं गङ्गाभास्वत्तनुजनितयोः सङ्गमतटे
न येन स्नातं तन्न हसितमहो नापि रुदितम् ॥५॥

'चाय' पेयमधिकृत्य—

दुग्धं यस्यां सुरसरिदिव प्राञ्जलं राजते चेत्
कृष्णा तृष्णातरलहृदयावर्जिका पत्रमूर्तिः ।
गुप्ता काचिन्मधुरमधुरा शर्करा सा त्रिवेणी
प्राप्ता स्यात् तां भुवि सहृदयः को विहातुं समर्थः ॥६॥



# बटुकनाथशास्त्री खिस्ते

(जन्मतिथिः—३०-१०-१९१८)

'वाणीविलसितस्य' प्रथम-भागे प्रदत्तपरिचयाः सुकविमूर्धन्याः श्री खिस्ते-महाभागाः साम्प्रतिके संस्कृतजगति गौरवभूताः सन्ति। एतेषां काव्य-मधु पायं पायं न कश्चन सहृदयस्तृप्तिमुपेयादित्यस्लाकमास्था । साम्प्रतं वाराणसेय-सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य साहित्यविभागाध्यक्षपदतो गृहीतावकाशा इमे स्वगृहे स्वान्तःसुखाय काव्यनिर्माणपरा शिवानुध्यानपराश्च विराजन्ते ।

यदि गणेशगुरौ सरसं मनोऽ-
मृतपिपासु च ते प्रिय ! सादरम् ।
नय तदा सततं श्रवणीयतां
बटुकनाथकवित्वमलौकिकम् ॥

## मङ्गलम्

नीरक्षीरविचारसारचतुरा यस्याः प्रसादाच्चिरात्
कीर्तिस्फाटिकवाटिकासु कवयः क्रीडन्ति वाक्कन्दुकैः ।
साऽन्तर्ध्वान्तविकारवारणवलद्विद्युल्लताविभ्रमा
नीवी नूतनसम्पदामिह महादेवी समुद्योतताम् ॥१॥

## समस्यापूर्तयः

प्रसुप्तं यत् स्वान्ते कलिकलुषतान्ते कृतधियां
स्फुरच्चिन्तारत्नप्रतिमनवनिर्माणनिपुणम् ।
तदेतत् केन्द्रीयात्कविकुमुदिनीकेलिनिलयात्
पुनर्विद्यापीठात् समुदयतु वाणीविलसितम् ॥२॥

न भीष्मग्रीष्मोष्मज्वरकवलितं नो घनघटा-
गलद्धाराकारागृहदलितपत्रं क्वचिदपि ।
न शीर्णं शीततौं कविमधुकरानन्दसदनं
मधौ दिव्याम्भोजं जयति ननु वाणीविलसितम् ॥३॥

नितान्तं शुद्धान्ते निगडितमभूद्यत् किल पुरा
कदाचित् केषाञ्चित् सरणिमुपयातं श्रवणयोः ।
इदानीं स्वातन्त्र्यात्प्रसरति सभागारशिखरे-
ष्वमन्दं नारीणां प्रखरतरवाणीविलसितम् ॥४॥

न वा विद्या हृद्या भवति निरवद्या न चरित-
प्रभा सत्यं दूरे क्वचिदपि च सत्या परिहृतम् ।
तथाऽपि स्वच्छन्दोच्छलितनयविद्यापरिचयं
युगे यूनामस्मिन् विकलयति वाणीविलसितम् ॥५॥

अविच्छिन्नं तृष्णातरुणगणिकालिङ्गनवशात्
पिपासां दुर्वारां धनचयनमात्रे कलयतः ।
पुरस्तादारब्धं मधुरतरवाणीविलसितं
फलं किञ्चित्सूते न हसितमहो नापि रुदितम् ॥६॥

नवीने साहित्याध्वनि रसगुणालङ्कृतिकला-
कथाशून्ये स्वैरोल्लसितपदविन्यासचटुलान् ।
कपीन्द्रान् पश्यन्त्या नवनवकवीन्द्राकृतिधरान्
गिरां देव्या किञ्चिन्न हसितमहो नापि रुदितम् ॥७॥

इत्थं वन्ध्या धेनुः सकलजनकल्याणभणिति-
र्नयज्ञानां नाऽस्मन्मनसि कुतुकं कन्दलयति ।
पुनः प्राप्ते संसद्भवनपदनिर्वाचनविधौ
वशीकुर्याल्लोकान् न हसितमहो नापि रुदितम् ॥८॥

प्रयाते हेमन्ते श्रयति शिशिरे दूरपदवीं
मधौ लब्धस्पन्दे मदनपदवन्धे श्रुतिगते ।
कथं वा नाऽऽयातः प्रिय इति मृगाक्ष्या पथि दृशं
प्रयच्छन्त्या कस्मान्न हसितमहो नापि रुदितम् ॥९॥

अध्यारूढः पदमविरताराधनासाधनाद्यै-
र्गर्वोन्नद्धश्चटुषु पटुभिः पूरितश्रोत्रमार्गः ।
द्वारीभूतैर्विनयकुशलैः कार्यहेतोर्वितीर्णं
पत्रं पुष्पं पुरुषतिलकः को विहातुं समर्थः ॥१०॥

संन्यस्यापि श्रुतिशतशिरोवाचमुच्चार्य तारं
हारं कण्ठे स्फटिकदृषदां सन्निवेश्यांशुसारम् ।
सारङ्गाक्षीकरकिसलयन्यस्तपूजोपहारं
द्वारं सिद्धेरिव यतिपतिः को विहातुं समर्थः ॥११॥

व्याख्यातुश्चेत्पदमधिगतं विश्वविद्यालयान्त-
स्तत्प्राप्तव्यं तदधिकमुपाचार्यपीठं परस्तात् ।
प्राप्ते तस्मिन् भवति तरसाऽध्यक्षभावाभिलाषः
सिद्धे तस्मिन् कुलपतिपदं को विहातुं समर्थः ॥१२॥

भूरिक्लेशैर्भवमरुमहामार्गकान्तारजन्यै-
र्निर्विण्णोऽपि श्रितबुधजनोद्गीतवाग्वैभवोऽपि ।
यावद् देही न भवति शिवे ! त्वत्कृपापाङ्गपूत-
स्तावत्तृष्णामणिगुणनिकां को विहातुं समर्थः ॥१३॥

यद्यप्यत्र कलिन्दजासुरधुनीनद्योर्निपेया दशा
सा काचित् प्रणयस्थली परिमिलत्कल्लोलकोलाहला ।
गुप्ता तत्र सरस्वती पुनरियं सत्काव्यधारामृते-
ष्वाविर्भूय धिनोति नस्तदपरः सोऽयं विदां सङ्गमः ॥१४॥

आयाते कुसुमायुधस्य सचिवे माद्यन्मिलिन्दे मधौ
तद्भीत्या शिशिरेण बन्धनगृहान्मुक्ता हिमानीमयात् ।
अद्येयं रजनी चिराद्विरहिणी मन्दानिलोच्छ्वासिनी
स्पृष्टा हन्त सुधाकरेण नयनानन्दावहः सङ्गमः ॥१५॥

दक्षास्ते बहवो वसन्ति नियतं कक्षासु तत्र स्पृहा
व्यर्था वीक्षणमात्रके जनशतैर्ग्रन्थालयः सङ्कुलः ।
सायं हे सहपाठिनि ! श्रमपरीहाराय याचे क्षणं
कृष्णापानगृहे न च प्रतिहतस्तत्राऽऽवयोः सङ्गमः ॥१६॥

• •

# श्रीनारायण मिश्रः

पूर्वं प्रदत्तपरिचयाः श्रीमिश्राः काव्यनिर्माणेऽपि तथैव चरमं साफल्यं भजन्ते यथा विविधदर्शनानामध्ययनाध्यापनयोः । एतेषां भारती 'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले तर्के वा समं लीलायते'। वाराणसेयेषु सुकविषु श्रीमिश्रा विशिष्टं स्थानं भजन्ति ।

श्रीनारायणमिश्रा
निहततमिस्राः स्वशिष्यवर्गस्य ।
सत्काव्यनिर्मितावपि
न-मितां कलयन्ति वैदग्धीम् ॥

## समस्यापूर्तयः

अज्ञानाप्तं विपदनुगतं लोकमालोकहीनं
भूयो भूयश्चिरमनुभवन् जन्मजन्मान्तरेषु ।
दोषातीतं स्वयमुपनतं निर्विकल्पे समाधौ
ब्रह्मानन्दं परमिह कविः को विहातुं समर्थः ॥१॥

लोकानन्नोदकविकलितान् लोभयन् व्याधगीतै-
र्मायाजालप्रसरवलितान् धर्षयंश्चिन्तयंश्च ।
पारिव्राज्यच्छलकवलितं स्यात् पुनर्वा न वेति
प्राज्यं राज्यं श्रितमतिचिरात् को विहातुं समर्थः ॥२॥

सम्प्राप्तास्तु निशा शशाङ्कधवला मृद्वी च शय्यास्तृता
सन्नद्धा नवयौवना सुवदना रामा सकामा पुरः ।
उत्कण्ठापि च नायकेऽस्तु सरसे दूराच्चिरादागते
दैवं चेत्प्रतिकूलमस्ति न तदा सञ्जायते सङ्गमः ॥३॥

हित्वा काम्यनिषिद्धकर्मनिचयं यत्नेन शास्त्रोदितं
प्रायश्चित्तमुपासनस्विदधता नित्यं च नैमित्तिकम् ।
याऽगम्या पदवी जनेन ननु तामह्नाय दातुं क्षमो
यः सोऽयं जयतात् कलिन्दतनयामन्दाकिनीसङ्गमः ॥४॥

आपतन्ती दिवस्त्रातुकामा भुवो भीतिर्मीतिश्च रीतिं दिशन्ती मुदः ।
यत्र सम्पन्निधाना महेशाङ्गना सोऽयमाश्रीयतां यामुनः सङ्गमः ॥५॥

आत्मसात् कुर्वती नीलशीले जले बद्धमूलं कलेः कल्मषं पापिनाम् ।
भास्वती यत्र भास्वत्सुता राजते सेव्यतां सैष भागीरथीसङ्गमः ॥६॥

धीरनीरा सरस्वत्यपि प्रेरिताऽन्तर्वहन्ती हरन्ती विपत्तिं नृणाम् ।
निर्दहन्ती महापातकानां कुलं यत्र सोऽयं जयेज्जाह्नवीसङ्गमः ॥७॥

जन्मजन्मार्जितैः पापतापैर्भृशं पच्यमानं जनं हेलया तारयन् ।
वारयन्नन्तरायानुपायान् श्रियः साधयन् राधनीयः सतां सङ्गमः ॥८॥

घातयन् सन्मतिं दुर्गतिं साधयन्नुन्नतं सज्जनं चाप्यधः पातयन् ।
वर्धयन् शूलमज्ञानमूलं सखे हीयतां यत्नतो दुष्कृतां सङ्गमः ॥९॥

सहृदयान् मधुरैर्मधुराक्षरैर्मदयितुं विहितो विविधोद्यमैः ।
भवतु सर्वरसो हृदयङ्गमोऽत्रभवतां भवतां कविसङ्गमः ॥१०॥



## गीतम्

किन्नाम भारतदुर्दशापरिवर्त्तनं भविता न वा ।
देशेऽत्र किं वसनाशनादिविवर्धनं भविता न वा ?

श्वानं समर्चयतीह लोको निर्दयं वलतीह गौः ।
किं भुक्तिमुक्तिविधायि धेनुसमर्चनं भविता न वा ? किन्नाम०

निक्षिप्य गर्त्ते सर्वशास्त्रमशास्त्रमुन्नयते जनः ।
किं धर्मभूमावत्र शास्त्रसमर्थनं भविता न वा ? किन्नाम०

अनुसरति धूर्त्तमतं नरः परिहाय साधु सतां गतम् ।
किं सर्वहर्षनिधानसत्पथवर्तनं भविता न वा ? किन्नाम०

वालो विना वसनान्नपानं रुदन् प्रैति दिवानिशम् ।
किं सर्वसौख्यसमन्वितं चिरजीवनं भविता न वा ! किन्नाम०

अज्ञान् पदेषु निधाय विज्ञान् तर्जयन्त्यधिनायकाः ।
यदि नाथ किम्परतोऽपि विज्ञसमर्चनं भविता न वा ? किन्नाम०

यो यो नियुक्तो रक्षको जातः स एव तु भक्षकः ।
अतिनिर्घृणे तन्मनसि किं शुभचिन्तनं भविता न वा ? किन्नाम०

पापा अशङ्का मनसि शङ्का दृश्यते सुकृतात्मनाम् ।
देशे किमस्य विपर्ययस्य विसर्जनं भविता न वा ? किन्नाम०

दुष्टैरदुष्टैर्निर्विशेषं पूरितं कारागृहम् ।
जनतासदाचरणात् पुनः किं निर्जनं भविता न वा ? किन्नाम०

निन्दन्ति सत्यपरं जनाः स्तुन्वन्त्यसत्यपरं नरम् ।
किन्नाम सत्यासत्ययोरालोचनं भविता न वा ? किन्नाम०

रक्षन्ति लुण्टाकं समर्था भीषयन्ति च सज्जनम् ।
किंस्विच्चिरादपि सज्जनोऽर्चनभाजनं भविता न वा ? किन्नाम०

स्वं शासनाधिकृतं वदन् दुश्शासनो रमतेऽस्य किम् ?
तद्भीमभुजबलवैभवादनुशासनं भविता न वा ? किन्नाम०

लब्ध्वापि सर्वं लुब्धका ये पीडयन्त्यबलाकुलम् ।
अवघ्रातयन्ति च किन्नु तेषां मर्दनं भविता न वा ? किन्नाम०

व्यर्थं वदन्नाङ्ग्लादिकं स्वं नामधन्यं मन्यते ।
किम्भारते सुरभारतीसम्भाषणं भविता न वा ? किन्नाम०

किं श्यामला शस्यैर्धरित्री स्यात् सवित्री सम्पदाम् ।
वातः किमध्वरगन्धवाहो हव्यवाहो दक्षिणः ॥

कालेऽम्बुवाहो वर्षकः सरितां प्रवाहोऽधर्षकः ।
शान्तिर्नभसि दिवि भुवि च जनहितचिन्तनं भविता न वा ?

किन्नाम भारतदुर्दशापरिवर्तनं भविता न वा ?
देशेऽत्र किं वसनाशनादिविवर्धनं भविता न वा ?

• •

# प्रियव्रत शर्मा

( जन्मतिथिः—१-११-१९२० )

पूर्वमस्माभिः प्रदत्तपरिचयाः श्रीशर्माणो गीर्वाणवाचो मूकसाधकाः सन्ति । इमे यथा जीवने तथा काव्यनिर्माणेऽतीव शालीनाः समुल्लसन्ति । नानारसायननिर्माणप्रगल्भा इमे काव्यरसायनेनापि सहृदयान् प्रमोदभरितान् संविधातुं प्रभवन्ति ।

प्रियव्रतः काव्यवसन्ततर्पिको
रसायनास्वादविदुत्तमः कविः ।
सचेतसां मान्यतमो निसर्गतो
मृगाङ्कशीलो रसभावसर्जकः ॥

## समस्यापूर्तयः

स्निग्धच्छायामनुदिनमनुस्मृत्य यस्याः प्रकामं
ध्यायं ध्यायं धवलधिषणाधौतमूर्त्तिं यदीयाम् ।
सर्वो लोकः प्रभवति जगज्ज्वालमालां विषोढुं
मातुस्तस्याश्चरणयुगलं को विहातुं समर्थः ॥१॥

यस्याः स्तन्यामृतरसभरैः शैशवे स्नातगात्रः
क्रोडे यस्याः कमलमृदुले क्रीडितं बाल्यकाले ।
यावज्जीवं सकरुणदृशोर्वीक्षितं पाति यस्याः
मातुस्तस्याश्चरणयुगलं को विहातुं समर्थः ॥२॥

कवीनां सत्काव्यं रसमयमलङ्कारकलितं
बुधानां वैदग्ध्यं श्रुतिपथपटुत्वं मतिमताम् ।
विचित्रा चित्राणां कृतिरमृतसङ्गीतलहरी
कलाया लालित्यं सकलमिह वाणीविलसितम् ॥३॥

हिमानी कल्याणी कलयति नदीनां कलकलं
रविर्मन्दं मन्दं सरति निशितामंशुसरणिम् ।
जवं धत्ते नूनं मलयपवनः स्वं त्वभिनवं
वसन्ते सम्प्राप्ते जयति कविवाणीविलसितम् ॥४॥

प्रत्यूषे या सृजति निखिलं विश्वमात्मप्रकाशा-
दानक्तं या वहति विविधां भूमिकामम्बिकायाः ।
रात्रौ सर्वं प्रकृतिकरणं संहरत्यन्तिका या
मातुर्देव्याश्चरणयुगलं को विहातुं समर्थः ॥५॥

देशेऽस्मिन् भुवि विश्रुते गुणगणावासे निवासे सता-
मेकोऽहं बहुधा विभाजिततनुः स्यामित्युदाराशये ।
यत्रानेकमतावलम्बिविदुषां भिन्नोक्तिभाषाजुषां
नानाभूजनुषां सरित्पतिनवे प्राज्यः सदा सङ्गमः ॥६॥

कालिन्दी कलिता गले विगलिता भागीरथी वक्षसि
स्वान्ते यस्य सरस्वती रसवती सर्वात्मनाऽन्तर्हिता ।
मूर्ध्ना येन तपस्विवर्यचरणाः संधारिताः श्रद्धया
सोऽयं तीर्थवरः सदा विजयते प्रायागिकः सङ्गमः ॥७॥

प्रवालाक्तं पुष्पं विकसति मनो वीक्ष्य सरसं
महर्घत्वं खेदं जनयति पदं चेतसि पुनः।
द्वयोरित्थं दोलायितहृदयकल्पैः कविवरै-
र्वसन्ते सम्प्राप्ते न हसितमहो नापि रुदितम् ॥८॥



## मदन-गीतम्

मदिरवदन मदन रे !

नीरसोऽपि रसभरितः
युवा भवति जर्जरितः ।
विटपी हिमदग्धशिखः
पीतोऽपि नवो हरितः ॥

युवजन-जीवनधन हे !

मधुपाने मधुपानां
मज्जति विजने श्रेणी ।
चमरी मृगयूथे सा
सज्जति विह्वलवेणी ॥

सकलहृदयदलन हे !

देहरहित ! रतिनायक !
देहिनामरतिदायक !!
मधुरस्वरवरगायक !
कुसुमितशरसंधायक !!

मुनिजन-मन्मथन हे !

आम्रकुसुमकृताभरण !
मलयानिलसुरभिततन !!
सर्षपधृतपीतवसन !
पल्लवदलमृदुलवदन !!
लोहिततरनयन हे !

कोकिलकलरवकलाप !
मधुकरकुलकलालाप !!
प्रणयाकुलकलितताप !
वलितविषमनयनशाप !!
विरह-दहनदीपन हे !
मदिरवदन मदन हे !!



## प्रत्यूष-तारिका

सप्ताश्वान् निशि तन्द्रितान् मुदितया संप्रेरयन्ती दृशा
पङ्गुञ्चाप्यथ सारथिं सदरुणं संभावयन्ती रथे ।
सूर्यस्यागमनं सुनीलगगने संसूचयन्ती त्विषा
पूर्वस्यां दिशि सुप्रभातसमये विद्योतते तारिका ॥११॥

एका सा गगने तमोविजडिते विद्योतमाना तमो-
जालं विप्रसृतं चिरात् करुणया संछिन्दयन्ती द्रुतम् ।
लोकान् निद्रितमानसान् निपतितानुत्थापयन्ती करै-
रेकैवाहमिति प्रगल्भवचसा देव्याः समुज्जृम्भते ॥१२॥

तामालोक्य चमत्कृताम्बरधरां रत्नप्रभाभास्वरां
संत्यज्यालसभावभूमिमनिशं सर्वे जना जाग्रति ।
भक्तो धावति, पुण्यजह्नुतनयातीरं समीरान्वितं
मूर्ध्नाऽऽदाय हलं कृषीवलदलः शालेयमालङ्घते ॥१३॥

बालः सज्जति पुस्तकानि पठितुं विद्यालयप्राङ्गणे
वृद्धश्चङ्क्रमणाय कम्पितकरैर्यष्टिं समन्विच्छति ।
गच्छन्ति प्रयताः समुद्यमपरा यन्त्रालयं कार्मिका
गा दोग्धुं परिमार्जयन्ति पयसां पात्राणि गोपालिकाः ॥१४॥

छात्राः शास्त्रमुपासतां धनपरा वित्तं सुवृत्तं बुधाः
शूराः शस्त्रकलां कलाकृतिपराः साहित्यसङ्गीतकम् ।
विप्राः धर्मपथं तथा नृपतयश्छन्दानुरोधाज्जनान्
ज्योतिष्के ! सुहृदां मनः सुसदनं शश्वत्त्वयालोक्यताम् ॥१५॥

● ●

## शिवदत्तशर्मा चतुर्वेदी

पूर्वं प्रदत्तपरिचयाः श्रीचतुर्वेदिनः संस्कृतकाव्यजगति सर्वथा नवीनैर्भावविशेषैः परिहासव्यङ्ग्यप्रचुरैश्च प्रयोगैः सुतरां स्पृहणीयाः सन्ति। एतेषां काव्ये राजस्थानभूमेराभिजात्यं माधुरी विनोदकलिता भङ्गीभणितिर्वाराणसेयं नैर्मल्यञ्च सरलतयाऽऽकलयितुं शक्यते।

मणयः शिवदत्तहृत्खनेः
कवितारूपमवाप्य निर्गताः।
हृदि नाम लसन्ति कस्य नो
ललिताश्चारुकिशोरनन्दनाः॥

### समस्यापूर्तयः

संगमः सर्वसौख्यप्रदः स्नेहिनां
संगमः सज्जनानां सदा प्रीतिदः।
सारभूतो धरित्रीतले चेतसां
चेतनाभिः समं नूतनः संगमः॥१॥

दिव्यदिव्यापगानामयं संगमः,
तत्र वाङ्माधुरीणामहो संगमः।
पुष्कलार्थस्य संसूचना संगमः,
अद्य भाग्येन सर्वैर्गुणैः संगमः॥२॥

नेतृणामुच्चसेवाव्रतैः संगमः,
तस्कराणां पुनस्तैरहो संगमः।
तत्र केषां तु कारागृहैः संगमः,
नैव भूयात् प्रभो तादृशः संगमः ॥३॥

अद्य सारस्वतस्रोतसां संगमः
काव्यलोकेश्वराणां महासंगमः।
कामवर्षी भवेच्छन्दसां संगमः,
नित्यमेवास्तु देवेश यः संगमः ॥४॥

प्रबोधानां पन्था निरतिशयमाभाति कठिनो
विलोपो यत्रास्ते मधुरिमभराणां विलसताम्।
इदं तु प्रत्यग्रप्रमुदितरसास्वादभरितं
कवीन्द्राणां मन्ये सरसमिह वाणीविलसितम् ॥५॥

विरोधोन्मत्तानां समविषमभावे निपतनं
महानेतृणां किं किमपि मतिमत्त्वप्रकटनम्।
विलासाः पत्राणां नवनवविचारैः प्रखरिताः
सचित्रा लोक्यन्ते तदुपरि च वाणीविलसितम् ॥६॥

न सत्कारे द्रव्यं विहितमधुना नूतनयुगे
न मिष्टान्नादौ वा व्ययकरणमावश्यकतरम्।
स्फुरच्चञ्चत्कक्षे ऽनलपविभावादिभरिते
सतां सद्भिः सङ्गे परममिह वाणीविलसितम् ॥७॥

स्फुरद्युद्धोन्मादे खरतरकरालास्त्रजटिले
मिथो म्लाने चित्ते भवति विकटं दृश्यमतुलम् ।
प्रहारेभ्यः पूर्वं नवनवसमारोपकरणं
कदाचित्सांमुख्ये प्रखरतमवाणीविलसितम् ॥८॥

शिवे वीरे चञ्चद्व्रणकवचसम्भारलसिते
प्रदग्धुं प्रोद्युक्ते गरलनिकरान् दस्युनिवहान् ।
समायातो दीप्तो निजरचनया भूषणकवि-
स्तदीयं तत्काव्यामृतमसमवाणीविलसितम् ॥९॥

अहो सौख्यालीनामिह खलु समाभाति नगरं
प्रयागेऽस्मिन् पीठे सहृदयरसास्वादसदनम् ।
निलिम्पानां वाचामथ कविवराणां प्रकटनं
परं सौख्यं श्रोतुं सरसमधु वाणीविलसितम् ॥१०॥

अवस्थास्तिस्रो या जगति विदिता जागृतिरथो
सुषुप्तिः स्वप्नाख्या सकलमिह तास्वेव लसितम् ।
तदा जाग्रत्स्वप्ने हसितमपि तत्रास्ति रुदितं
सुषुप्तौ तूष्णीयं न हसितमथो नापि रुदितम् ॥११॥

अहो दैन्याद्रीणां शिखरपतनं मृत्युकरणं
समन्तादापीनं प्रबलतरदुर्दान्तदलनम् ।
कथञ्चिन्मृत्यौ वा मृतकवपुषां शल्यकरणं
तदेतद् दृष्ट्वाऽऽस्ते न हसितमहो नापि रुदितम् ॥१२॥

विवेके केषाञ्चिद् हसितमिव जायेत रुदितं
क्षुधार्तानां लोके रुदितमयमेवास्ति हसितम् ।
समृद्धे संसारे हसितहसितं सर्वहसितं
यथाजातानां वा न हसितमथो नापि रुदितम् ॥१३॥

उत्कोचानामिह शबलताऽनन्तरूपेषु दृश्या
यत्रोत्कोचप्रबलतरता तत्र भोग्या विलासाः ।
अद्योत्कोचः शिव इति हरिर्वाथ देवो हनूमान्
चञ्चद्रूपं द्रविणमतुलं को विहातुं समर्थः ॥१४॥

सद्योजातं विगतविभवं पूरुषं सान्त्वयन्तं
स्वल्पं दुग्धं लघुतरसितापत्रचूर्णादियुक्तम् ।
किञ्चिल्लावण्यसुपरिकरं पात्रसंक्षेपसारं
चायं पेयं गरमगरमं को विहातुं समर्थः ॥१५॥

नानाजन्मार्जितसुकृतकैरागतां प्राणतुल्यां
यातायातैरथ च निभृतं पोषितां शुल्कदानैः ।
देहं स्वर्गं खलु विदधतीं सर्वसम्पत्समृद्धां
स्वल्पाघाते प्रमुखपदवीं को विहातुं समर्थः ॥१६॥

श्यामश्यामां गरलतरलां विस्फुरन्नेत्रराजिं
वाचालां वा कथमपि न कोऽप्यादरात् स्वीकरोति ।
किन्तु स्मेरां सरसमधुरैरक्षरैरालपन्तीं
वामां मुग्धां रहसि मिलितां को विहातुं समर्थः ॥१७॥



वन्दामहे विवशमात्मनि संस्थिताय
कस्मैचिदप्यतितमां समुपेक्षिताय ।
प्रोद्दाममानमदपाटनपीडिताय
ज्ञानाभिमानदमिताय महेश्वराय ॥१८॥

तस्मै नमो मम जडत्वविमुद्रिताय,
आपद्गतेन तु सदा मनसा नताय ।
सौख्ये कदाचिदपि नो मनसि स्थिताय
स्पष्टाक्षरैरपि भृशं विनिषेधिताय ॥१९॥

एतावतीष्वपि घृणासु सुसंस्थिताय
दुर्वृत्तभावसहितेऽपि कृतास्पदाय ।
दुर्दान्तदस्युहृदयेऽपि विराजिताय
सद्विप्रयोगकरणाय नमः शिवाय ॥२०॥

सर्वैर्विरुद्धमतिमद्भिरुपासिताय
रामेण रावणकरैरपि पूजिताय ।
पूतैश्चिरन्तनतरैरसकृन्नुताय
विद्राविराक्षसगणैरपि वन्दिताय ॥२१॥

वन्दामहे सरसवाक्पठितस्तुताय
चित्तैकपात्रभरिताय विचारकाय ।
सम्यग् विबोधनकराय सदैव धैर्य-
मालाप्रदाय परमाय महेश्वराय ॥२२॥



अहो महतां महत्त्वम्

पीवरत्वं यानवत्त्वम् ।

तत्र निविडं निश्चलत्वम् ॥

अहो…………

भाषणे निखिलं कवित्वम् ।

अवसरे तीक्ष्णं पवित्वम् ॥

अहो…………

अग्रतो ननु वैदिकत्वम् ।

पृष्ठतस्तु धनुर्धरत्वम् ॥

अहो…………

घोषणासु विवेकवत्त्वम् ।

पालनेषु सरीसृपत्वम् ॥

अहो…………

वर्तमाने भोगवत्त्वम् ॥

आयतेरथ निश्चितत्वम् ।

अहो…………

निशीथेष्वपि चेतनत्वम् ।

सभामध्ये तन्द्रितत्वम् ॥

अहो…………

स्वीकृतस्य तु विस्मृतत्वम् ।

नैजकार्यातन्द्रितत्वम् ॥

अहो……………

झटित्यश्रुविमोचकत्वम् ।
प्रोच्चपदलालाटिकत्वम् ॥

अहो…………

निखिलशत्रुविमर्दकत्वम् ।
अखिलमित्रसमर्पकत्वम् ॥



# महात्मा गान्धी

कलौ युगेऽस्मिन्प्रथितो जगत्यां
गौरण्डसाम्राज्यसमापको यः ।
स्वातन्त्र्यसिंहासनवद्धगात्रः
स वन्दनीयो नितरां महात्मा ॥२४॥

यो देशसेवाव्रतमादधानो
धराधराधीशविकम्पनश्च ।
विलोपको दाम्भिकचक्रवर्तिनां
सर्वत्र विश्वे प्रथितो महात्मा ॥२५॥

अमुं पुरस्कृत्य समस्तलोकाः
शोकैर्विहीना गुरवस्तदाऽऽसन् ।
श्रीकृष्णकालस्य तदा तदा स्मृतिः
समेधिता येन स नो महात्मा ॥२६॥

दिव्योत्तमे दिव्यतरप्रभावे
तस्मिन् क्षणाय प्रविलोकितेऽपि ।
यो विस्फुलिङ्गो व्यचरत्समन्तात्
तत्प्रेरको द्योतिजयी महात्मा ॥२७॥

आसन् यदा नेतृवराः सहस्रश-
स्तेज्ञानविज्ञानमहाप्रवीणाः ।
सर्वेषु तेषु प्रथमोऽस्त्यचिन्त्यो
स सर्वमान्यो जगतां महात्मा ॥२८॥

वर्षैः शतानामखिलं हि राष्ट्रं
परैर्निबद्धं विगतस्वरूपम् ।
निभाल्य साफल्यमवाप तत्र
स सर्वमान्यो जगतां महात्मा ।।२६।।

यः पीडितान् वा दलितान् विरूपान्
श्रिया विहीनानपि जन्मनैव ।
दृष्ट्वा जनांस्तद्धृदये विवेश
सूक्ष्मेक्षणो वृद्धतमो महात्मा ।।३०।।

शक्तिस्वरूपानथ शक्तिपुञ्जान्
संसारमात्रे विदितप्रभावान् ।
प्रेम्णा विहीनांस्तु घृणाप्रदीप्तान्
कोपे चकार प्रसभं महात्मा ।।३१।।

यः कालयात्रासु समेधितश्री-
र्भवत्यलभ्योऽपि स वै महात्मा ।
तस्येतिहासावलिमण्डितस्य
संज्ञाऽपरेयं प्रथिता—"महात्मा" ।।३२।।

## गीतम्

संस्कृतस्नेहिनां कुर्महे स्वागतम् ।
तैर्वदान्यैस्तु सत्यापितं जीवनम् ॥

संस्कृतस्योन्नतिं कामयन्ते जनाः ।
संस्कृतं प्रोन्नतं तत्र का कामना ॥

अस्मदेवोन्नतौ तत्तु संभावितम् ।
संस्कृतस्नेहिनां कुर्महे स्वागतम् ।।

दिव्यनाम्नामृषीणां कवीनामहो ।
वाक्यधारामृतं सत्सरः संस्कृतम् ॥

अद्य तेषां स्मृतावेव सुस्वागतम् ।
संस्कृतस्नेहिनां कुर्महे स्वागतम् ॥

संस्कृते सत्यनिष्ठाऽस्मदीया भवेत् ।
ग्रन्थसार्थस्य बुद्धौ विलासो भवेत् ॥

तादृशानां क्षणानामहो स्वागतम् ।
संस्कृतस्नेहिनां कुर्महे स्वागतम् ।।

संस्कृतं कल्पवृक्षात्मकं सेवितम् ।
भारते तस्य सर्वोन्नतं जीवनम् ।।

सा तडित्तादृशी यत्र विश्वं नतम् ।
संस्कृतस्नेहिनां कुर्महे स्वागतम् ।।

दुर्दशा चेन्मदीया न्वहं कारणम् ।
अर्थलाभे मया योजितं संस्कृतम् ।।

संस्कृतं मुक्तमेवाऽस्ति नो सेवितम् ।
संस्कृतस्नेहिनां कुर्महे स्वागतम् ॥

• •

# रतिनाथ झा

पूर्वं प्रदत्तपरिचयाः श्रीझामहोदयाः वाराणसेयेषु संस्कृतकविवरेण्येषु शिरोमणयश्चकासति । एतेषां व्यक्तित्वस्य दर्पण इव सहजं परिचायकं चमत्कार-परिलसितं काव्यं सहृदयचित्तानुरञ्जकं भवति ।

रतिनाथकविः स्मृति गतो
हृदि नो कस्य मुदं प्रकल्पयेत् ।
यदि तस्य कवित्वमद्भुतं
परिशील्येत ततस्तु का कथा ॥

## समस्यापूर्तयः

प्राज्यं राज्यं कनककलितं कान्तकायं नवीनं
धन्यान् बन्धून् प्रियकुलगृहं वल्लभां भव्यभावाम् ।
मानस्यार्थे पदमनुपमं मानिनस्त्यक्तवन्तो
लक्ष्मीलाभं विषमपि पिबन् को विहातुं समर्थः ॥१॥

घोरं तप्त्वा प्रचुरधनदं मानदं वाधिकारं
प्राप्य प्रीतश्चिरमभिमतं दीनहीनं प्रभावम् ।
माने म्लानेऽप्यनुचितवचोभङ्गिभिर्दूषकाणां
ज्ञातास्वादः सुखमयपदं को विहातुं समर्थः ॥२॥

तृष्णालोलं विषयजसुखं प्राप्यमालक्ष्यचित्तं
लोके तावन्मुदमनुभवत्यत्सुकं धावमानम् ।
आत्मानन्दं क्षणमपि हृदि ध्यानलग्नः समाधौ
लब्ध्वा प्रीतस्त्वमृतपदवीं को विहातुं समर्थः ॥३॥

न्यायस्थाने सुकृतनिलये विश्वविद्यालये वा
तीर्थे तीर्थे स्वजनभवने मन्दिरे वा मठे वा ।
दर्शं दर्शं मलिनचरितं भारतीयप्रजायाः
क्लेशावेशं मनसि जनितं को विहातुं समर्थः ॥४॥

शास्त्रज्ञानामृतमतिशयं प्रौढबुद्ध्या धयित्वा
पायं पायं सुकविरचनास्यन्दिपीयूषपूरम् ।
अङ्के कृत्वाभ्युदयमसकृत् प्राप्य निःश्रेयसञ्च
देवीं वाचं प्रति रतिमहो को विहातुं समर्थः ॥५॥

## सङ्गमः

ये निन्दन्त्यनिशं गुरूनपवदन्त्यार्यान् रमन्तेऽनृते
मायामाश्रयन्त्यनारतमुदासीनांस्तुदन्त्यन्वहम् ।
सज्जन्ते परपीडने शुभमते लुण्ठन्ति शीलं स्त्रियाः
तेषां भारतभूतलेऽद्य भवति प्रायः श्रिया संगमः ॥६॥

ये शीलं प्रतिपादयन्ति करुणां क्लेशेऽपि नोज्झन्ति ये
स्वान्प्राणानपि रक्षितुं न कलुषीभावं श्रयन्ते क्वचित् ।
ये मुञ्चन्ति न चार्जवं न सुकृतं सत्यं न पुण्यक्रियां
भाग्यादेव कदाचिदेव भुवने तेषां भवेत् संगमः ॥७॥



किमप्यद्भुतमिवास्वादगोचरीकुर्वन्तो रसिका भावुकाश्च

काव्यं येन विरच्यते सुकविना निर्दूषणं भूषणै-
र्भव्यं सद्गुणगुम्फितं रसमयं वक्रोक्तिविस्फूर्जितम् ।
तस्याप्यात्मनि सत्कवेरुदयते प्रीतिस्तदैवोत्तमा
भाग्यात् काव्यविदां यदैव घटते भव्यात्मनां संगमः ॥८॥

अनास्थेये धर्मे विलयमुपयातेऽथ विनये
नयेऽतिव्यत्यस्ते बलवति खलानामिह गणे ।
इदानीं देशेऽस्मिन्नुदयति समाजे नवनवे
सतामास्येऽत्रश्यं न हसितमहो नापि रुदितम् ॥९॥

कपालानां मालामुरसि गजकृत्तिं कटितटे
सफूत्कारान् सर्पान् वपुषि शशिलेखां च निटिले ।
अनङ्गारेर्दृष्ट्वा रतिसुखगृहे शैलसुतया
प्रसादात् संत्रासान्न हसितमहो नापि रुदितम् ॥१०॥

स्वतन्त्रेऽस्मिन् देशे स्थिरयितुमिवार्थैः सुरगिरः
प्रतिष्ठां शास्तारो बहुविधमुपायं विदधते ।
उदारैरुद्गारैर्मलिनचरितैरर्थनिरतै-
र्विदां द्वैधीभावान्न हसितमहो नापि रुदितम् ॥११॥

इदानीमुष्णांशोर्विजिततुहिनं वीक्ष्य किरणं
मरन्दैरामोदैर्विकसति न लक्ष्मीकुलगृहम् ।
सरस्वत्याः सत्याचरणनिपुणानां गुणवतां
सुतानां चारित्र्यैर्न हसितमहो नापि रुदितम् ॥१२॥

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
स्वधर्मानुष्ठानैर्जननमनयन्नर्चिततरम् ।
इदानीं तत्रैवाभ्युदयमधिगन्तुं नयविदां
चरित्रैरस्माकं न हसितमहो नापि रुदितम् ॥१३॥

प्रवृत्ते दुर्वृत्ते दुरितरतचित्ते युवजने
निरातङ्कं नृत्यत्यविनयमये दस्युनिवहे ।
परोत्पीडाक्रीडास्वखिलभुवि दीप्तासु सततं
धृतेः शान्तेर्गीतोच्छ्वसितमिह वाणीविलसितम् ॥१४॥

तमस्तोमे लीनं शुचिरुचिविहीनं हतनयं
महादीनं गर्वाङ्कुरनिचितचित्तं कुवचनम् ।
परिष्कर्तुं स्वान्तं मलिनमनसामद्य पठतां
गुरूणां निस्तन्द्रं प्रभवति न वाणीविलसितम् ॥१५॥

कदर्येष्वौदार्यं, रणशिरसि संहारपटुता-
मतीव त्रस्तेषु प्रथितमहिमानं जडधियाम् ।
विनीतत्वं दर्पोद्धतहृदयभाजामनुपमं
कवीन्द्राणां सूते मधु मधुरवाणीविलसितम् ॥१६॥

जनाक्रोशे व्याप्ते विलयमुपयातेऽथ नियमे
प्रबुद्धे सङ्घर्षे स्वपिति जनहर्षे प्रतिदिशम् ।
महार्घत्वे घोरे जनमनसि कामं कलुषिते
नयज्ञानां घोषो विफलमिह वाणीविलसितम् ॥१७॥

सुसम्पन्ने राष्ट्रे रचयति नवीनास्त्रनिचये
महिम्नः सम्भूत्यै धनजनसमाकर्षणपरे ।
कृते सैन्योत्कर्षे प्रशमपरिचर्यानयविदा-
मिदानीं संसारे लसति शमवाणीविलसितम् ॥१८॥

विजेतुं सद्द्राक्षां मधुमधुरिमाणं तिरयितुं
प्रपञ्चं तन्त्रीणामधरयितुमुल्लासलसितम् ।
परीरम्भं रम्भाकृतमपि सदम्भं क्षपयितुं
विदग्धोऽसन्दिग्धो नमति कविवाणीविलसितम् ॥ १९॥



## रेवाप्रसाद द्विवेदी

(जन्मतिथिः—२२-८-१९३५)

'वाणीविलसितस्य' प्रथम-भागे प्रदत्तपरिचयाः संस्कृतजगति स्वकीयया भावयित्र्या कारयित्र्या च प्रतिभया समानं लब्धयशसः श्रीद्विवेदिवर्याः स्वकीयेन सीताचरितनाम्ना महाकाव्येन द्वित्रेषु पञ्चषेषु वाऽऽधुनिकसंस्कृतमहाकविषु परिगणनीयाः सन्ति ।

सीताचरित्रपरिकीर्तनपूतचेताः
काव्यानुशीलनविधौ प्रतिभाप्रगल्भः ।
सद्यूथिकाघटितशोभनकीर्तिदामा
रेवाप्रसाद इति कोऽपि सनातनोऽस्ति ।।

### समस्यापूर्तयः

राधिकां नु वसुदेवसूनुना जानकीं नु रघुनन्दनेन यः ।
मेलयत्यनुदिनं सितासितच्छायया विजयते स सङ्गमः ।।१।।

कुम्भपर्वणि सतां समेयुषां रागिणामिव विरक्तचेतसाम् ।
यस्य वक्षसि निवृत्तिभस्मना सत्प्रवृत्तिमुकुरो विमृज्यते ।।२।।

अक्षयेण तरुणा चराचरप्रत्यगात्ममहसेव रागिणाम् ।
यत्र चेतसि तटस्थता स्थितप्रज्ञतेव विनिवेश्यते दृढम् ।।३।।

श्वेतमम्बु शितिनाऽम्बुना युतं तच्च तेन मिलितं त्रयीमयीम् ।
यत्र काञ्चनरसैकविग्रहां सूनृतां जनयतः सरस्वतीम् ॥४॥

वैनतेयविधृतः समुच्छलन् यत्र राजति पुरा सुधाघटः ।
यत्र राजति च कापिशायनी सत्कवीन्द्रचषकोच्छलद्रसा ॥५॥

दर्शनानि विविधानि सन्ततं राजनीतितरुणानि यज्जले ।
स्नान्ति पान्ति च चराचरात्मकं विश्वमेतदुदितात्मवत्तया ॥६॥

यत्र गायति महामुनिर्भरद्वाज आश्रमगतः पराः श्रुतीः ।
यत्र नृत्यति च सूर्यकान्तवाक् कालिदासकवितेव सूनृता ॥७॥

सिंहशीर्षमहिते ध्वजोत्तमे कालचक्रपरिणाममापके ।
यत्र गुप्तनृपतिः स्वगौरवाण्युल्लिलेख हरिषेणवल्लभः ॥८॥

सर्वशुक्लपरिधानबन्धुरो नीतिधर्मपरिणीतिसुन्दरः ।
विप्रभाव इव यत्र मूर्तिमान् मालवीयचरणोऽप्यजायत ॥९॥

राजहंस इव निर्मलान्तरो नेहरूकुलमणिर्जवाहरः ।
यत्र दाशरथिवत् प्रजाहितानन्वियेष कमलाविभूषितः ॥१०॥

चन्द्रशेखर इति स्वतन्त्रताभालपट्टरचितो विशेषकः ।
यत्र वीरगतिमाप्य भानुमन्मण्डलं नु विभिदेऽरिमण्डलम् ॥११॥

सा परा प्रकृतिरेष पूरुषः सानुरागभरिताऽसकौ यती ।
मन्त्र एष ननु यत्र भिन्नयोरम्भसार्लिखितवर्ण ईक्ष्यते ॥१२॥

बुद्धिरेव सुदृढा गुणोज्ज्वला नौस् तथैव हृदरित्र संगया ।
सत्वरं तरति शोकमात्मविद् यत्र कामजनितं यदृच्छया ॥१३॥

मिश्रणं तदिदमौरुतापरः सन्निपात इव युष्मदस्मदोः ।
जीवसाक्षिपरमात्मसाक्षिणोः शोभनं व्यतिकरं तनोति यः ॥१४॥

तामजां जयति यत्र पूरुषो यां विचित्रपरिणामबन्धुराम् ।
नर्तकीमिव विभुज्य दर्शको नर्तितुं स्वयमपि प्रचेष्टते ॥१५॥

उर्वशी-नयन-कज्जलैर् नव-प्रीति-मेदुरितकान्तिभिर् जलम् ।
यत्र सूर्यदुहितुस्तमालवन्नीलवर्णमधुनापि दृश्यते ॥१६॥

रागदिग्धहृदयः पुरूरवा यत्र तीर्थसलिलेऽनुबिम्बनात् ।
उर्वशीं त्रिपथगामिवाम्बरादागतामपि विवेद भूमिजाम् ॥१७॥

कर्णिकारलतिकां सुमोच्चयैर्वञ्जुलस्य लतिकां नु योजयन् ।
गौरकृष्णसलिलः प्रयागगः पूज्यतां सुरभिवत् स संगमः ॥१८॥

हठाकृष्टो गन्धैरपि दिविषदां प्रीतिजननै-
र्जलौकोभिर्दृष्ट्वा परिवृतशरीरां कमलिनीम् ।
मरालः कामार्त्तो न हसितमहो नापि रुदितं
वृणीते, निश्वासैर्लिखति तु कृतान्तस्य चरितम् ॥१९॥

अनामृष्टं हस्तान्नियतिललनाया अकलितं
कृतान्तस्य क्रूरात् परिणमनचक्राच्च सततम् ।
परं तं भूमानं, तदुपमितिसौभाग्यविलसद्-
रसोल्लासं किं वा नमत कविवाणीविलसितम् ॥२०॥

न शब्दानां गुम्फं न च समुचितामर्थरचनां
जनश्छन्दोमात्रं रसयतितरामद्य मृगवत् ।
कवीन्द्राणां तस्मादधरितसुधास्वादकलनाऽ
प्यसौ कस्मिन् धिग्धिग् श्रयतु बत वाणीविलसितम् ॥२१॥

एकत्राग्निर्ज्वलति धगिति क्रूरकर्मा परत्र
झञ्झावाताः क्षपितविपुलाश्वत्थकाण्डा अटन्ति ।
काले ह्यस्मिन् यममुख इवोज्जृम्भमाणे कराले
सर्वाः काष्ठा ब्रुवत तनुतां स्वं विवेकं क्व हंसः ॥२२॥

हंसा वायसमण्डलैः, सुरभयो गोमायुभिर्, देवता
दैत्यैः कौतुकमन्दिराणि च हहा प्रेतैर्व्रियन्तेऽधुना ।
पाञ्चालीमकुतोमुखीं गतघृणो दुश्शासनः साम्प्रतं
भूयो हन्त विवस्त्रयत्यथ च तां दुर्योधनश्चुम्बति ॥२३॥



# गोरक्षनाथस्तुतिः

आम्रेडः क्ष्वेडपानोद्धुरमधुरहृदः श्रीमृडानीप्रियस्य
द्वैरुक्त्यं दानवारेरचपलकमलासेविताङ्घ्रिद्वयस्य ।
वैयर्थ्यं कामधेनोरनुचितिरुचिता पारिजातस्य शश्व-
च्छ्रीगोरक्षः सदा स्यान्मयि नमति कृपापारवश्यस्य वश्यः ॥१॥

कीनाशः पाशमाशु क्षिपति शमयति स्वर्गराजोऽशनिं स्वं
तारुण्यं बन्धयोगे विसृजति वरुणो राजराजश्च राज्ये ।
हुङ्काराद् यस्य मुष्टेर्हनुमत इव तं सिद्धसङ्घैर्नमस्यं
शस्यं गोरक्षनाथं प्रथितरतिरसौ नाथते सामरस्यम् ॥२॥

मत्स्येन्द्रस्य तपः कृपापरवशं किं वा भवानीपते-
र्विश्वोत्थानपरः शमो यदुत भूलोकस्य पुण्योत्करः ।
यद्वा तान्त्रिकसिन्धुमन्थनसमुद्भूतोऽद्भुतः कौस्तुभः
श्रीगोरक्षमहागुरुर्विजयते सर्वङ्कषो योगिराट् ॥३॥

सूर्याचन्द्रमसाविवोदयगिरिस्वर्णश्रिया मण्डितौ
शेषाख्यौ श्वसनाशनाविव लसत्कश्मीररागश्रियौ ।
कर्णाभ्यर्णचरिष्णुकुण्डलमणी गोरक्षनाथस्य तौ
धुन्वातां जगतां सृतौ निपततां पापानि तापानिव ॥४॥

छिन्ते कालुष्यराशिं निविडमुपचितं यत्प्रसादोऽवसादं
भिन्ते तत्तत्क्रियासु प्रतिफलविधुरास्वाशु, रिङ्क्ते च कुण्ठाम् ।
क्षुन्ते दैन्यानि विङ्क्ते कुनियतिमुदितां किं च भुङ्क्ते विपाकांस
तांस्तान्, तान् योगिराजान् नमति वसुमतिर् द्यौश्च गोरक्षनाथान् ॥५॥

वेधा यत्र शिरो धुनोति विधुतव्यापार उच्चैस्तरां
लक्ष्मीर्यत्र च वारिवस्यकलनामाविष्करोत्यञ्जसा ।
भारत्या धृतमौनया प्रणमिता गोरक्षनाथस्य सा
भूतिः सन्ततमातनोतु सुमतिं प्रज्ञासु संसारिणाम् ॥६॥

आशाबन्धान्धकूपप्रपतितजनतोद्धारको वारकोऽसद्-
योगानां, भोगरोगग्लपितसुजनुषां सौभगस्यादिसेतुः ।
आत्मारामोऽपि सिद्धिक्षपितनियतिभीर् लोकसंग्राहको यस्
तस्मै नाथाय कस्मैचन विनतशिरा आनुतेऽसौ त्रिलोकी ॥७॥

गुरोर् गोरक्षनाथस्य पादुकायाः खणत्कृतिः ।
निवारयतु भक्तेभ्यो विधातुः कुटिलां भ्रुवम् ॥८॥



# जगन्नाथ पाठकः

प्राचीनैः सुकविभिः क्षुण्णस्य मार्गस्य गतानुगतिकः । काव्यसङ्ग्रहस्यास्य सम्पादकः । 'विद्यापीठेन प्रकाशितस्य 'कापिशायनी'त्याख्यस्य काव्यस्य रचयिता ।

कवितेति न यत्न एष मे
कवितां सत्कवयो हि कुर्वते ।
न बिभर्मि कवित्वमीदृशं
भणितिर्मे किमपीङ्गितं 'त्वयि' ॥
—स्वस्य

## समस्यापूर्तयः

सौरभ्येनोल्लसति सकलोद्यानभूमिर्नु यस्याः
सौन्दर्येण स्फुरति नयनाह्लादकेनाद्भुतं या ।
तां केनापि व्यपदिश भवत्येव सा पाटलश्री-
स्तां सम्मुग्धां प्रकृतिललितां को विहातुं समर्थः ॥१॥

नीतो नित्यं मरुमयभुवि स्तीर्णदर्भाङ्कुरायां
कालो येनातिशयविरसः प्राणविक्षोभशीलः ।
तादृङ् मन्ये कथमपि घटाटोपसंकीर्णमेघ-
ध्वानं क्षेत्रं क्षणमुपगतः को विहातुं समर्थः ॥२॥

व्याकीर्णेऽस्मिन् जगति परितो व्याप्तकोलाहलोग्रे
भीतिग्रस्ते छलविषमितेऽराजके भ्रष्टधर्मे ।
चेल्लभ्येत क्वचिदतिशयैकान्तरम्यस्तटान्तो
नद्याः शान्तस्तमिह मतिमान् को विहातुं समर्थः ॥३॥



सम्मुखतया काव्यपाठं शृण्वन्त कवयः

स्निग्धं किञ्चित् सरसमृदुलं स्वादु किञ्चिच्च काम्यं
प्रेयः किञ्चिद् विमलमुदयद्रागमौदार्यगूढम् ।
वाग्वैचित्र्यं स्फुटपरिमलं कालिदासीयमद्य-
त्वेऽपि स्फीतं वद सहृदयः को विहातुं समर्थः ॥४॥

मन्ये स्पर्शपरावधिर्घटितयोरेकत्र यो देहयोः
स स्यान्नैव हि सङ्गमः सुमतिभिर्मान्यो धराधामनि ।
यस्त्वन्योन्यसमर्पणे विकलयोः क्षीराम्भसोः साम्यभृत्
कश्चित्पीडितयोर्द्वयोर्हृदययोरैक्यस्थितिः सङ्गमः ॥५॥

गाङ्गस्याम्भस आगतस्य घटनं यद् यामुनेनाम्भसा
कौमुद्याः शशिना च सङ्गतिरहो किं नौचितीं रक्षति ।
योग्यो वा सदृशश्च वा परिणतौ जायेत सर्वात्मना
यो यस्यास्ति नु तस्य तेन घटनं नामान्तरं सङ्गमः ॥६॥

स्वीयास्त्राणि विमुच्य वैरमथवा विस्मृत्य युद्धस्थलेऽ-
न्योन्यालम्बितपाणि शाम्यदधिकाशङ्कं प्रवीरावुभौ ।
प्रीत्या सम्मिलतः स एव समयः स्यात् सङ्गमाह्वो मतो
नद्याः संघटनस्थली त्वविदुषां काचिन्मते सङ्गमः ॥७॥

रामो नास्ति महीतले दशमुखाः सर्वत्र संजाग्रति
प्रीतिः काऽपि सरिच्च सम्प्रति वहत्युग्रैर्विषैर्दूषिता ।
त्वं मौनं भज, कस्य कस्य पुरतो याताऽसि रागादरे
जायेताद्य न केनचित्सुमतिना मद्वाणि ते सङ्गमः ॥८॥

न याहीत्याख्याते रुदितमथ याहीति हसितं
वनान्तप्रस्थानावसर उपयातेऽतिकरुणे ।
विलोक्य श्रीरामाननकमललक्ष्मीं विकसितां
परं श्रीजानक्या न हसितमहो नापि रुदितम् ॥९॥

जगद्व्यापाराणां हसितरुदितानां तु बहवो
जना व्यामोहेषु क्षपितसमया यान्ति विलयम् ।
सुबोधिप्रस्यन्दे समविषमभावोपशमनात्
सुधन्यैर्वा कैश्चिन्न हसितमहो नापि रुदितम् ॥१०॥

परीतापं प्रागातप इह करोति स्म वत मे
न जाने को हेतुर्घटित इयता नाम विधिना ।
इदानीं छायाऽपि व्यथयति कुतो यान्तु दिवसा
मयैतच्चिन्तायां न हसितमहो नापि रुदितम् ॥११॥

हसद्भिर्न प्राप्तं क्षणमपि हि कारुण्यमथ ते
रुदद्भिर्नो लब्धं कथमपि न चित्तप्रशमनम् ।
द्रवीभावं नेतुं किमिव हि विधातव्यममुना
कठोर त्वां चेत् स्यान्न हसितसमहो नापि रुदितम् ॥१२॥

क्षुधार्तान् धिग्वृत्तीन् कतिचन निषण्णांस्तरुतले
कुरागव्यासक्तानुदरभरितान् वा कतिचन ।
स्वदेशे वैषम्यग्रहविवलितान् वीक्ष्य निजकान्
कियद्भिर्वा सद्भिर्न हसितमहो नापि रुदितम् ॥१३॥

कुतोऽपि भ्रान्तीनां जनयति नदीं वेगकलितां
क्वचित् सत्यं वर्त्म प्रकटयति मोहान्तचलितम् ।
कदाचित् सुश्लिष्टं प्रियमथ समाधानचलितं
कदाचित् सुक्लिष्टं विरसमिह वाणीविलसितम् ।।१४।।

प्रभावं तत्किञ्चिज्जनयति चिरस्थायिनमहो
न कर्तुं यं काव्याद्यपि न सरसं वा प्रभवति ।
अपूर्वं शब्दार्थप्रभृतिभिरनामृष्टमधिकं
प्रगाढे मौने यत् स्फुरति ननु वाणीविलसितम् ।।१५।।

वसन्तव्याप्तं तद् भवति मन उद्यानममलं
स्मितानां पुष्पाणां प्रकर इव संवर्षति मुहुः ।
सुगन्धिः सद्भावानिल इव समन्तादुदयते
विधत्ते चेत्साक्षाद्धृदयभुवि वाणीविलसितम् ।।१६।।

शशिज्योत्स्ना रामायणमिह कदाचित्परिणता
कदाचित् प्रोद्दीप्तो विलसति महाभारतरविः ।
कदाचित्सुस्निग्धा ज्वलति विमला दीपकशिखा
तदेतत् किं रूपान्तरमिह न वाणीविलसितम् ।।१७।।

अलंकारैर्भारैर्श्लथय न हि लावण्यकलितां
समासैर्भूयोभिः शिथिलय न च न्याससरलाम् ।
निसर्गन्यासेयं स्फुटरसमयी सौम्यकलना
कवे धन्यानां ते सृजति हृदि वाणी विलसितम् ।।१८।।

# अन्तर्मेघदूतम्

स्वान्त स्वास्थ्यं परिहर किमप्यत्र नास्त्येव सौख्यं
केऽप्येते त्वां धनमदजुषः शप्तुकामाः कुबेराः ।
भोग्या पीडा विरहजनिता कुत्रचिद् दूरदेशे
स्निग्धच्छाये सगिरिगहने तिष्ठतैकाकिना रे ॥१॥

संयान्त्येवं परिणतिममी सङ्गमा विप्रयोगे
तिष्ठत्येकं क्षणमिह सुखं स्मृत्युपारूढदुःखम् ।
विद्युद्दामस्फुरणमिव तत् सच्चमत्काररम्यं
पश्चात् स्थायि प्रचिततमहो सूचिभेद्यं तमो रे ॥२॥

यद्यप्येतद् विलसितमहो सूत्रधारस्य कस्या -
प्यन्तर्देशे कलितचरितस्याभिरामः प्रपञ्चः ।
धावं धावं जन इह कुतोऽप्येति शान्ति न कश्चिद्
व्याप्तं भूमाविह हि सलिलं हन्त मारीचिकं रे ॥३॥

कश्चित् स्निग्धं स्मयत इह चेत्तस्य विद्धि प्रकामं
वैफल्यं तत् स्मितमिति न किं गोपनेच्छा विपत्तेः ।
मूकाः केचित् प्रबलबधिराः केचन प्राणवन्तः
सञ्चेष्टन्ते जगति मृतवद् भारभूताश्च भूमेः ॥४॥

सन्त्रासस्य प्रबलमहिमा ग्रीष्म एष स्वभावा-
ल्लोके सम्यक् पिबति परितो जीवनं कोऽपि दैत्यः ।
प्रीतिः प्रावृट् क्वचिदुपगताऽन्यत्र देशे वराकी
जीवन्त्वेते कथमिव तृणाकीर्णकान्तारभागाः ॥५॥

कोऽपि प्रीतः प्रकटमहिमा सौख्यसम्मोदमत्तो
हर्म्यारूढो विलसति मुहुः पानसक्तोऽङ्गनाभिः ।
शोकेनास्तङ्गमितमहिमा रिक्तसर्वस्वराशिः
स्त्रस्योपेक्षां सततसहनो नैव निद्राति कश्चित् ॥६॥

वैषम्याख्यो वलति विषमो व्याधिरेषोऽत्र लोके
मात्स्यन्यायो नयति सकलं जीवनं क्वापि गर्ते ।
कारुण्यार्द्रः क्षणमपि बुधश्चक्षुषा कश्च पश्येद्
दीनानादीनवपरिगतानश्रुसङ्कीर्णनेत्रान् ॥७॥

यक्षः कश्चित्परवशजनुः कोऽपि शास्ता कुबेरो
नैषा गाथा प्रथमकलिता कालिदासस्य लोके ।
दर्शं दर्शं विषमचरितं सर्वतस्तेन किं वै-
कान्ते देशे रुदितमुदितं येन तन्मेघदूतम् ॥८॥

गाथा काचित्कथमपि मता कामिनोर्हन्त नैषा
तुच्छे दृष्टिर्निपतति न यत्तस्य सम्पन्नदृष्टेः ।
मेघस्तस्मिन्न खलु विरसं पुञ्जितं धूममात्रं
(धौतात्मानो जनकतया स्नानपुण्यैर्जलौघै-)
र्ये दीनानां शरणमधिकं रामगिर्याश्रमास्ते ॥९॥

स्निग्धा छाया प्रशमिततपव्यत्ययया यत्र लभ्या
देयं मूल्यं किमपि न ततो वासलाभस्य हेतोः ।
प्रीतिस्रोतः प्रवहति यतः प्रस्तरान्तर्निगूढो
रम्यो देशः क्वचन सुलभः कस्य धन्यस्य तादृक् ॥१०॥

यत्कान्तात्वं प्रणयविमलस्वान्तभृत्यङ्गनायां
रूढं तत्तु स्फुरति सुधियां चेतसीव प्रकामम् ।
स्वार्थोद्भ्रान्ते जगति विमलं सर्वथा दुर्लभं तत्
प्रीतिस्निग्धास्तदनुमितये हेतवो दृङ्निपाताः ॥११॥

शुष्कं क्लिष्टं त्रिभुवनमिदं रम्यतां याति सर्वं
यत्सान्निध्यादमृतमिव संवर्षति स्वान्तभूमौ ।
प्रीतिः काचिन्नवतृणततिः स्फीतमुत्पत्तिमेति
क्षीयन्ते च प्रखरतपना वासरा रिक्तरिक्ताः ॥१२॥

कान्ता नाम स्वरलहरिका जीवनेति स्फुटायां
सद्वीणायां सरसमृदुला मुक्तपीयूषधारा ।
कान्ता नाम प्रणयतटिनी शान्तविश्रान्तवेगा
सन्मर्यादाऽर्पणनिविडिता सङ्गता जीवनाब्धौ ॥१३॥

क्षुद्रत्वं द्रागुपशममुपैत्यैक्यमप्यभ्युदेति
प्रीतिर्भावो झटिति घटते किल्बिषं याति नाशम् ।
कापि प्रेमद्रवसुविमला यामुनी वारिधारा
गाङ्गे काये कलयति गतिं जीवने सुप्रयोगे ॥१४॥

रूपं बाह्यं गणयति न यद् भौतिकत्वाच्च हेतोः
प्रीतिर्मात्रं हृदयनिहिता ह्याश्रयो यस्य लोके ।
यस्मिन् जन्मान्तरगतमहो सौहृदं प्राणितीदं
तत्कान्तात्वं विलसति मुहुर्भावसाम्यं समन्तात् ॥१५॥

शापो नाम प्रकृतिकठिनस्यातिमत्तस्य भर्त्तु-
र्दम्भस्फारः परवशजनेऽत्यन्तमेवं निरीहे ।
कश्चिद् भूयाच्छिखरिणि यतो वज्रपातः स मन्ये
सह्यः किन्तु क्षपसमधिके का हि तस्यौचिती स्यात् ॥१६॥

यद् यस्यास्ते प्रकटमधिकं जीवनाधारभूतं
तत्तस्मात् स्यात्पृथगिति कियानाग्रहः स्वामिनां वै ।
तोयान्मीनं नयति पृथगित्यत्र दृष्टं न केन
प्रीतिध्वंसः कठिनहृदयस्यास्य लोकस्य रीतिः ॥१७॥

योऽयं लोके भवति विरहो जीवनाधारभूतात्
प्रोत्तप्तायां मरुमयभुवि प्राय एषोऽस्ति वासः ।
धन्यो यो हि क्षपयति सुखं स्वेष्टवर्गेण सार्धं
छाया येषां शरणमुदयद्भूतिसौभाग्यभाजाम् ॥१८॥

निर्यान्तोऽपि प्रसभमसवो नैव निर्यान्ति देहा-
दग्निः कोऽपि ज्वलति विषमः सर्वतस्तीव्रतेजाः ।
तस्मिन् काले स्वजन इति नो जायते क्वापि बुद्धि-
र्व्याधिः कश्चिद् विरह इति यो वर्तते नैव साध्यः ॥१९॥

( अपूर्णम् )

० ०

# चन्द्रभानु त्रिपाठी

(जन्मतिथि : फाल्गुनशुक्लदशमी, १९८१ वि० सं०)

पूर्वं प्रदत्तपरिचयाः श्री त्रिपाठिनः प्रयागीयेषु संस्कृतकविषु मूर्धन्याः। यथा भानुरिव कठोरे व्याकरणे प्रगल्भन्ते तथा चन्द्र इव काव्यव्यापारेऽपि सुतरां रमन्ते।

व्याकरणे यो भानु-
श्चन्द्रः काव्यस्य निर्मितावुदितः।
तस्मिन् त्रिपाठिनीयं
प्रणतिः श्रीचन्द्रभानौ नः ॥

## समस्यापूर्तयः

गुरोर्गङ्गानाथप्रथितयशसः सारपुटके
महार्हे हर्म्येऽस्मिन् निखिलनिगमान्तादिमहिते।
निधाने विद्यायाः बहुबुधवरासादितपदे
सदा विद्यापीठे भवति कविवाणीविलसितम् ॥१॥

सभाध्यक्षौ मध्ये कविवरकुलालङ्कृतिकरौ
विराजन्ते सर्वे सदसि सरसाः काव्यरसिकाः।
प्रयागप्राचार्यः प्रमुखयजमानोऽनुगुणकः
समारब्धं साम्प्रमुखकविवाणीविलसितम् ॥२॥

(कोऽपि संस्कृतसाहित्येतिहासक्रमः प्रस्तूयते)

परमेश्वरनिःश्वासो वेदो विदितः प्रणवसमेतः ।
ऋषिभिः प्रोक्तः श्रुतः षडंगो व्यस्तो ज्ञाननिकेतः ॥१॥

आदिकवेः कविता रामायणरूपमवाप ललामम् ।
भारतसूत्रपुराणरचयिता व्यास उवाच निकामम् ॥२॥

उपनिषदारण्यकनवनीतं गीताख्यं हरिगीतम् ।
निगमकल्पतरुगलितफलं भागवतं शुकसङ्गीतम् ॥३॥

पाणिनिभरतपतञ्जलिजैमिनिशंकरकपिलकणादाः ।
देवदनुजब्रह्मर्षिमनुजमुनिसंकलिताः संवादाः ॥४॥

कवितावनिताचिरविलासकविकालिदाससाहित्यम् ।
भारविमाघमहत्त्वं विदितं नैषधपदलालित्यम् ॥५॥

कविताहासो भासो बाणो गद्यकाव्यवनचारी ।
करुणाभवभवभूतिर्नवपथसंचारी च मुरारिः ॥६॥

बृहत्कथा बृहती नलचम्पूश्चर्या शतकं गेयम् ।
आर्यागाथासप्तशतीशुकसप्ततिमधुमधु पेयम् ॥७॥

अमरोऽमरुककविर्जयदेवो जयति च पण्डितराजः ।
वाणीचरणकमलरससेवी वन्द्यः सुकविसमाजः ॥८॥

टीका व्याख्या विवरणविपुलं विशदं महीमहीयः ।
प्राकृतमधुरिममहितमुदारं गम्भीरञ्च गरीयः ॥९॥

भजतो भविकं कृतिनः सुकृतं काव्यकुसुमकमनीयम् ।
सुरवाणीविलसितमतिललितं सरससुगुणरमणीयम् ॥१०॥

(श्रीमच्चन्द्रशेखराजादस्य वीरगतिं प्राप्तस्यार्धशताब्दीश्राद्धम्)

इयं लीलाभूमिः सुचिरशयिताजादमहसः,
इयं सा सन्मूर्तिः प्रसरति यतस्तैजसकणः ।
सदा सत्यं मित्रं विपदि हितमायूजरमिदम्
विलोक्यैतत्सर्वैर्न मुदितमहो नापि कुपितम् ॥१॥

वरं वन्यो वासः सुचिरमपराधीनमनसो
न भोग्याप्त्यै शत्रोर्वशलघनिवासः सुखकरः ।
वरं प्राणत्यागो न वरमरिहस्तेन मरणं
मृतेनाजौ यूना न फलितमहो नापि दलितम् ॥२॥

इदं ताम्रस्यास्ते कलशमभिनन्द्यं जनतया
पुरा वीरस्यासीदवचितयशोभस्मभरितम् ।
तदानीं सद्वृत्तं कथयति गिरा मूकमनसो
न हर्षो नो शोको न लसितमहो नापि भसितम् ॥३॥

इदं भागीरथ्याः सलिलसरसं पूतपुलिनं
व्यतीताः पञ्चाशच्छयितशरदो दुःखबहुलाः ।
चितादाहं दृष्ट्वाऽवददिति तदानीं जनगणः
प्रयातैस्तत्प्राणैर्न बुधितमहो नापि शयितम् ॥४॥

तदीयं तत्तेजः प्रतिभटघटाघस्मरवरं
इयं पूजाऽऽस्माकी स्मरणरमणीया च करुणा ।
गतः शूरः स्वर्गं प्रखरकरभेदेन भविकः,
इहागम्यास्माभिर्न हसितमहो नापि रुदितम् ॥५॥

तत्त्वं बुद्ध्वा निखिलनिगमान्तादिविज्ञानराशे-
र्वृत्तिं कुर्वन् सततसुखदामन्नपूर्णाप्रसादात् ।
वाराणस्यां मरणसमये विश्वनाथं विमुक्तिं
याचन् गाङ्गं विपुलपुलिनं को विहातुं समर्थः ॥१॥

प्रातः स्नात्वा यजनमननाधीतिगीतिप्रसक्तो
दानी मौनी सततपसा धूतपापानुतापः ।
पुण्ये तीर्थे तपनतनयाऽऽश्लिष्टदेवापगाया
माघे मासे सुविततटं को विहातुं समर्थः ॥२॥

संसारेऽस्मिन् बहुछलबले मोहमायाविलासे
मोघीभूते मलिनमनसा कल्पिते यत्नमात्रे ।
सर्वत्राणं विपदिसुखदं प्राणिमात्रैकगम्यं
दुर्गादेवीचरणशरणं को विहातुं समर्थः ॥३॥

भूत्वाऽभ्यर्थी विदलितदलस्याशु सम्मानितस्य
ग्रामे-ग्रामे प्रतिजनगृहं सस्मितं याचमानः ।
लब्ध्वा लोकप्रतिनिधिपदं प्राप्य मन्त्रिप्रतिष्ठां
भव्यान् भोगान् सुचिरमखिलान् को विहातुं समर्थः ॥४॥

## प्रतीक्षा

माता शीलवती पिता कुलवतीत्याभ्यामसौ सम्मता
रामा रूपवती रतिर्मम दृशा निर्वर्ण्य सम्मानिता ।
ग्राम्यो गूढमनोभवोऽहमभवं तां चिन्तयन् सर्वदा
एतस्या मृदुमांसलेन वपुषा भावी कदा सङ्गमः ॥१॥

### प्रतीतिः

श्यामेयं शयने समास्ति सुचिरं सञ्चिन्त्यमाना मुदा
दृष्टान्येव तदङ्गकानि मृदुलान्यालिङ्ग्यमानानि च ।
मुग्धाया मधुबन्धुरस्य वपुषः शोभासुधां सुस्वदे
तन्वङ्ग्या नवनीतकान्तमधुरैरङ्गैरयं सङ्गम. ॥२॥

### प्रतिपत्तिः

वाला मन्थरमन्मथाऽथ कमनी कान्ता रते राधिका
मातेति प्रथिता तथा तनुतनुर्बालोऽपि लीलालकः ।
कान्तः कान्तवपुः पिता मतमिदं सत्यं शिवं सुन्दरं
सम्मान्यः प्रकृतेः पुराणपुरुषस्यास्ते सदा सङ्गमः ॥३॥

### प्रतिष्ठा

बाल्ये बालकसङ्गसंगतिरभूत्सौहार्दसंवर्धिनी
तारुण्ये तरुणीरतिः, शिशुमुखस्यासीच्छुभं दर्शनम् ।
हे दुर्गे भवदीययाऽतिदयया लब्धं सुखं लौकिकं
संयाचे 'तव पादपद्मरजसा भूयात्सदा सङ्गमः' ॥४॥

## गीतिः

वन्दे श्रीगुरुपदकमलम् ।
यत्कृपया मूर्खो विज्ञानी जडो नरो बोधति सकलम् ।
यस्य शिक्षया मूको ब्रूते दीनशिरसि छत्रं धवलम् ।
हे करुणावरुणालय ! कुरुतात् शिष्यजनं सरलं सुफलम् ॥

### दोहा

कृपासिन्धुनररूपहरिगुरुपदपद्मं भाति ।
यस्य कृपा जडमपि नरं विद्वांसं विदधाति ॥

मुकुलितकंजकुड्मलै-
रभिव्यक्तः कोणेनाङ्गुलिभिरिव ।
मूर्त इव साममन्त्रो
वाणीवीणारवो जयति ॥



# गीतिः

( १ )

पूजक आयातो द्वारम् ।
नास्ति दुकूलं मङ्गलसूत्रं न च चन्दनं ललामम् ।
नापि पायसं फलमपि मधुरं न च जलमस्ति निकामम् ।
पुष्पमालिकासहित आगतोऽहं दुर्गे तेऽगारम् ॥

( २ )

गीतपदावलिरस्ति न मधुरा नापि मधुमयी वीणा ।
नैवेद्यं वरवस्तु न मेऽहं दीनश्चार्थविहीनः ।
गायन्ननु तिष्ठामि तव स्तुतिगीतं परममुदारम् ॥

( ३ )

देवि ! त्वं वरदाऽसि सुविदिताऽहं ते सेवकगण्यः ।
त्वं प्रीता भव तदा भवेयं पूरितकामो धन्यः ।
वितर वितर मे भद्रं भगवति ! हर हर बुद्धिविकारम् ॥

## गीतिः

मनोज्ञा कृतिः कालपाषाणपृष्ठे
कृता केनचित् केनचिन्नाशिता ।

( १ )

आगतो मध्वृतुर्मधुकरैर्मानितः,
कोकिलैराद्दृतः पक्षिभिः प्रार्थितः ।
फुल्लिताः कुरबका माधवीमण्डिताः,
पल्लवैर्वासिताः पादपा भूषिताः ।
दीर्घदाघो निदाघस्तपन्नागतः,
वाति मलयानिलस्तीव्रतापान्वितः ।
मन्दतामेति मृगमधुकराणां रवः,
कोकिलानां विरामं गतः कलरवः ।
सदा शोभिता या सुरभिणा वनश्रीः
निदाघेन हा हन्त ! सैवाहता ॥

( २ )

सरोजैर्मनोज्ञस्वरूपं सरोऽस्ति,
हिमांशोः प्रभाभासमानं नभोऽस्ति ।
सुकलमाग्रपिङ्गा धरित्री विभाति,
न शीतं न चोष्णत्वमधिकं चकास्ति ।
समायातमात्रे तुषारे त्विदानीम्,
जहातीव कमला कमलराजधानीम् ।

न सा शालिशोभा पुरेवानवद्या,
वनाली च नीहारमग्ना न हृद्या।
शरदि पुष्पिता सा कमलिनी प्रमुदिता
समागम्य माघेन सा मारिता ॥

( ३ )

मनोजस्य महिमानुभावाः प्रकटिताः,
शुभाङ्गेषु भव्या विलासाश्च घटिताः।
अपूर्वानुभूतिः सुरम्या च रीतिः,
अपूर्वोऽनुरागो न कुत्रापि विकृतिः।
प्रभावा इमे यौवनस्य प्रणष्टाः,
समागम्य कालेन जरयानुकृष्टाः।
न हासो विलासो न मनसः प्रसादः,
सदा सौख्यनाशो सुलक्ष्यो विषादः।
नवीनेन वयसा सुपुष्टा वपुःश्रीः
प्रवयसा बलाद् हन्त सा संहृता ॥

• •

# लीलाधर पन्तः

साम्प्रतं काशी-विद्यापीठेऽध्यापनरताः श्रीपन्तप्रवराः सुललितानां गूढ-"व्यङ्ग्य" परिलसितानां काव्यानां निर्माणेन वाराणस्याः संस्कृतकविषु सविशेषं सगौरवञ्च स्मर्यन्ते। यद्यप्येभिः स्वकाव्यप्रख्यापनविरतैः स्वान्तःसुखाय निर्माणप्रवृत्तैः स्थीयते तथापि बहवः काव्यमर्मज्ञा एतेषां कवित्वस्य मुक्तकण्ठं प्रशंसकाः सन्ति।

लीलाधरो नैव बिभर्ति लीलां
कामप्यहो यद्यपि काव्यमार्गे।
तथापि तस्य स्फुरिता हृदि द्राक्
लीलायते वाक् सुतरां प्रगल्भा॥

## समस्यापूर्तयः

वाणीविलसितान्तस्का वाणीविलसितोत्सुकाः।
वाणीविलसिते तेषां वाणी विलसतात् सदा॥१॥

सरस्वतीनां बह्वीनां सङ्गमे सङ्गमो नवः।
वाणीविलसितं पायादपायात् शाश्वतीः समाः॥२॥

बालानां सन्मणितभणितैस्ताडनोद्दीप्तिदिव्यम्।
कामान्धानामहमहमिकाक्लृप्तपादोपपीडम्॥
सा यत्रास्ते सहजसुलभा मद्विजा मा धनी वा।
ज्ञातास्वादः कुलपतिपदं को विहातुं समर्थः॥३॥

स्वप्नेऽप्यत्र सरस्वती न मिलिता लुप्तैव सा सर्वथा
श्रद्धाशान्तितरङ्गभङ्गविकला गङ्गाऽप्यथास्तङ्गता ।
दुर्बुद्धिः शमनस्वसा कलुषिता प्रोच्चालकल्लोलिनी
सर्वत्रैव विजृम्भते धिगधना तत् कीदृशः सङ्गमः ॥४॥

दास्ये दाक्ष्यं प्रथमसमयो मन्त्रिणः सेवनीयाः ।
निर्भर्त्स्यो यद् विनयपटवो मार्कटीं वृत्तिमेत्य ॥
सह्यं छात्रैः कृतमपवचस्ताडनञ्च श्ववृत्त्या ।
एतेषां तत् कुलपतिपदं सङ्गमो गौरवाणाम् ॥५॥

इतः सर्वं सौख्यं निरवधिकसौविध्यललितं ।
प्रतिष्ठा सम्प्रीतिः सुकृतलतिकेवास्ति फलिता ।
ततो दृप्तच्छात्राश्चपलविकटाः सङ्कटभटाः ।
मया वी. सी. भूत्वा न हसतिमहो नापि रुदितम् ॥६॥



## आधुनिकः कुलपतिः

आजन्मनो वंशपरम्परातो
यो राजनेतुश्चरणाब्जभृङ्गः ।
नेतुः स्वकुल्यः कुलजः प्रियायाः
कुलाधिपत्यस्य स योग्यपात्रम् ॥१॥

अक्षीणदाक्ष्यः स्वगुणे धुरीणो
दासानुदासोचितदास्यदक्षः ।
दर्वीगुणश्चाटुकलाप्रवीणो
हीणो न सर्वस्वसमर्पणेऽपि ॥२॥

उत्पद्यते योगपथाद् विपन्नः
सम्पत्तिभाजां भवने यथा सः ।
तथैव राज्याद् गलिताधिकारः
कुलाधिपत्याय प्रकल्पते वा ॥३॥

यथा प्रपातात् प्रपतन्ति सीकरा
अलातचक्राच्च यथास्फुलिङ्गाः ।
सत्तान्वितादेव दलात्तथेमे
कुलाधिपाला अपि निस्सरन्ति ॥४॥

विद्यार्थिसार्थस्य विसृत्वरायतिं
पादाहतिं सम्मुखथूत्कृतिञ्च ।
मालेव मौलौ विनतो निदध्यात्
कुलाधिपत्यं ननु निर्वहेत् सः ॥५॥

स्वविश्वविद्यालयचत्वरान्त-
र्मासस्य यो पञ्चष एव तिष्ठेत् ।
शेषं त्वशेषं समयं बहिश्चरो
विभूषयेदेष कुलाधिपत्यम् ॥६॥

श्मशानमार्गाभिमुखो मुमूर्षु-
र्गतेन्द्रियो निर्व्ययितस्वतेजाः ।
स्खलद्गतिः कम्पितगात्रयष्टि-
रादर्शभूतस्तु कुलाधिपः सः ॥७॥

सुखं सहस्त्रत्रयरूप्यकाणां
यो मासिकं वेतनमाददाति ।
सहस्त्रषट्कादधिकां च भक्तां (भत्ता)
कुलाधिपेष्वग्र्यतमः स शूरः ॥८॥

यश्छात्रनेतुः परिचर्यया वा
पदादिदानस्य विलोभनैर्वा ।
किं वा प्रतिद्वन्द्विदलप्रकल्पनैः
स्वकौशलं वा कुशलश्च कल्पयेत् ॥९॥

कार्यालये कार्यरतानुजीविनः
शिक्षापराध्यापककान् वराकान् ।
यो भाययत्येकचरः कपीशो
यथा स मान्योऽस्ति कुलाधिपालः ॥१०॥

छात्राख्यलाङ्गूलिदलात् पलायते
फलग्रहो दर्शितदीर्घदन्तः ।
मुग्धाविभीषो विटपालिकेलिः
स वानरः स्यादथवा नरोऽयम् ॥११॥

अहर्निशं चाटुपरैरुपासितो-
ऽधिकारिभिः शिक्षकसङ्घमुख्यैः ।
तन्मध्यगः स्वं मनुते महीन्द्रं
महाभिमानी स कुलाधिपालः ॥१२॥

सभापतित्वाय सदा स्वयम्भूः
स्वसांसदैः संसदि तुद्यमानः ।
निहन्यमानः खरतर्कचक्रैः
स्थूणायते स स्थविरः कुलस्य ॥१३॥

दिल्लिं गतो लक्ष्मपुरीं गतो वा
दिवानिशं दैन्यपरीतमूर्तिः ।
नेतुः प्रणामे सचिवार्चने वा-
ऽप्यनन्यभावेन समाहितात्मा ॥१४॥

अन्तर्विषः सन्नमृतद्युतीयते
सुजातरूपोऽपि मलीमसान्तः ।
विद्यार्थिभिर्जाङ्गुलिकैर्विनाम्यो
विशेषजन्तुः स कुलाधिपाख्यः ॥१५॥

अयन्तु ह्रीनां स्तुतिमभ्युपैति
परस्त्वहीनां स्तुतिमेति चान्यः ।
पूर्वो द्विजिह्वस्य सुहृत् परोऽसुहृत्
कुलाधिपोऽयं नकुलाधिपस्त्वसौ ॥ १६॥

मृगेन्द्रभुक्तोज्झितमार्गमांसे
चर्मास्थिसारे नखरैः खरैर्यथा ।
प्रचण्डतुण्डैः कलहायमाना
श्रद्धा प्रसिद्धा वृककाकगृध्राः ॥१७॥

धनानुदानेऽधिगतेऽनुवत्सरं
कुलाधिपालः सचिवाश्च गृध्नवः ।
वित्ताधिकृद् वित्तपरीक्षकास्तथा
यथाबलं मल्लकलामुपासते ॥१८॥

द्वाराद्थद्वारमितस्ततोऽपि
वाव्रज्यमानः सचिवालयस्य ।
लालाटिकैः स्वैः सचिवैः कुलस्था-
नुगम्यमानो विगताननश्रीः ॥१९॥

निवारितः सन्नपि वित्तमन्त्रिणा
पुनश्च शिक्षासचिवैर्निरस्तः ।
तथाप्यनिर्विण्णतया तदुन्मुखः
स्वकर्मशूरः स कुलाधिपः स्यात् ॥२०॥

वरीयसां छात्रगणे प्रभाविनां
शान्त्या अशान्त्याश्च नियामकानाम् ।
प्राध्यापकानां तनुजानुजादिकान्
अयोग्यकान् योग्यपदेषु योजयेत् ॥२१॥

सञ्चायिकायाः समितेर्धुरीणः
स्वमन्त्रिवर्येङ्गितरज्जुनद्धः ।
नियुक्तिहेतोर्विहितेऽन्तरीक्षणे
प्रदिष्टमार्गान्न पदं व्यपैति ॥२२॥

सुबुद्धिविद्याविमुखेषु मुख्यैः
स्वार्थान्धकैर्लाभपदाभिलाषैः ।
लुब्धैः स्ववर्ग्यैरुपवेष्टितो यो
विचेष्टते स्वेष्टसमष्टितुष्ट्यै ॥२३॥

कर्णेजपैर्दारुणदन्दशूकैः
नराकृतौ कालियकुल्यतुल्यैः ।
उपासितोपान्तमनन्तदन्तं
न चोपयान्त्येव भयेन सन्तः ॥२४॥

यो विश्वविद्यालयभूमिपिण्डं
निमज्जयत्येव विवादसागरे ।
स्वयन्तु निर्गत्य ततः पलायते
कुलाधिपालोऽभिनवो वराहः ॥२५॥

एकोदरः सोऽपि दशाननो यः
दशोदरोऽयं परमेकतुण्डः ।
क्व कुम्भकर्णः क्व स मेघनादः
कुम्भाकृतिर्योऽनवमेऽघनादः ॥२६॥

धैर्यं धराया जडतां हिमाद्रेः
तैक्ष्ण्यं श्वदन्तस्य वकस्य वृत्तिम् ।
बुद्धिं समानीय च जम्बुकस्य
विरच्यते यत् स कुलाधिपालः ॥२७॥

आपः समन्ताच्च समेत्य सर्वा
यथा समुद्राभिमुखं द्रवन्ति ।
तथैव यस्यावसथानुकूलं
कुलश्रियो यान्ति कुलाधिपः सः ॥२८॥

आरक्षकैः सर्वत एव रक्षितो
विशङ्कितान्तोऽप्यविशङ्किताकृतिः ।
पदे पदे यो विपदर्थदर्शिना
हृदा पदं स्वं मनुते गतागतम् ॥२९॥

निद्राङ्कमग्नः सहसा निशीथे
निष्कारणं क्रन्दनकरुपयुक्तः ।
भो पाहि पाहीति सभीतिरुच्चैः
क्रन्दन् पतन् धावति कान्दिशीकः ॥३०॥

अत्याहितं भ्रान्तिरियं कुतस्ते
निभालितं किं भवने भवद्भिः ।
पाणौ गृहीत्वा प्रिययानुयुक्तो
न किञ्चिदित्येव वदेन्नतास्यः ॥३१॥

दिवा भयस्थानशतानि यस्य
रात्रौ भयस्थानसहस्रकाणि ।
यच्चित्तपत्रस्य च कम्पमेक्ष्य
त्रपाकुलं स्याच्चलपत्रपत्रम् ॥३२॥

यः कार्यकालेऽपि न सौख्यमेति
प्रतिक्षणं व्याकुलशीर्णचेताः ।
तथापि वर्षत्रयकाललेखा-
समाप्तिभीत्यापि विदीर्यतेऽन्तः ॥३३॥

क्षीणेषु पुण्येषु मनुष्यलोकं
निर्गच्छतां स्वर्गनिवासिनां या ।
दशा भवेत् सैव दशातिदीना
कार्यावधेर्यस्य भवेदुपान्ते ॥३४॥

प्रयाणकाले स च पूर्वसेवकै-
र्वकैर्यथा मत्स्यनिराशमानसैः ।
विनिन्द्यमानः समुपेक्ष्यमाणो
निर्भर्त्स्यमानश्च विहीयमानः ॥३५॥

विद्यालयाद् याति वहिर्विषण्णो
निर्वृत्तचेताश्च विदीर्णचेताः ।
मनुष्यसम्मर्दगतो विलीनो
यथोदबिन्दुः पतितः पयोधौ ॥३६॥

एकस्मिन् दिवसे पुनः स्मृतिपथं यात्येव विद्यालये
छात्राध्यापककर्मचारिनिचयः प्राप्नोति तां सूचनाम् ।
स्थानीये लघुवृत्तपत्रकदले कोणे क्वचित्संस्थिताः
संस्थाया अवकाशघोषणपराः सूक्ष्माङ्किताः पङ्क्तयः ॥३७॥



मधुरगम्भीरकाव्यपाठेन सहृदयाननुरञ्जयन्तः कविसम्मेलनाध्यक्षाः डॉ० श्री० भा० वर्णेकरमहाशयाः

## श्रीधर भास्कर वर्णेकरः

(जन्मदिनम्—३१-७-१९१९)

स्वनामधन्या नानाकाव्यनिर्माणेन प्रख्यातयशसः श्रीवर्णेकरमहाशया इदानीं नागपुरविश्वविद्यालये संस्कृतविभागाध्यक्षपदात् गृहीतावकाशाः सन्ति। आधुनिकेषु संस्कृतजगतः कविवरेषु सर्वथा विशिष्टं समादरणीयं स्थानमिमे लभन्त इत्यत्र नास्ति संशीतिलेशोऽपि। एभिर्निर्मितं शिवराजमवलम्ब्य श्रीशिवराजोदयं काव्यं नवदिल्लीस्थसाहित्याकादमीद्वारा पुरस्कृतम्। एतेषां काव्येषु सन्ति—मन्दोर्मिमाला, स्वातन्त्र्यवीरशतकम्, रामकृष्णपरमहंसीयं (शतकम्), विवेकानन्दविजयं महाकाव्यञ्चेति।

वर्णेकरं श्रीधरभास्करं तं
कर्णे करं कः कुरुते निशम्य।
स नूनमेवं भविता मनुष्य-
वेषेण कश्चित् पशुरेव नान्यः॥

### समस्यापूर्तयः

परं धीरोदात्तं श्रुतिविहितसन्नीतिपरमं
चरित्रं यत् पुण्यं सवितृकुलदीपस्य महितम्।
कृतं काव्यं दिव्यं रसगुणमयं येन मधुरं
तदाद्यं वाल्मीकेर्भुवि जयति वाणीविलसितम्॥१॥

न यस्मिन्लेशोऽपि क्वचिदपि कुपथ्यस्य ददृशे
यदत्यन्तं सत्यं सकलजननिःश्रेयसपरम् ।
यदल्पप्रज्ञानामपि च विबुधानां प्रियतमं
मनोज्ञं साधूनां भुवि जयति वाणीविलसितम् ॥२॥

न यस्मिन् सत्यस्य क्वचिदपि शतांशोऽपि ददृशे
सहस्रांशो वाऽसौ जनहितधियो नैव विबभौ ।
यदग्रे पीयूषं परिणमति चान्ते तु विषवत्
प्रसिद्धं नेतॄणां भरतभुवि वाणीविलसितम् ॥३॥

अयोध्यासाम्राज्ये नरपतिपदं तेऽद्य विहितं
विमाता कैकेयी वनगमनमाकांक्षति परम् ।
इति श्रुत्वा वाक्यद्वयमसदृशं हन्त सहसा
रघूत्तंसेनोच्चैर्न हसितमहो नापि रुदितम् ॥४॥

यदारातिव्रातो निपतति हि शस्त्रास्त्रसहितो
विजेतुं स्वं राष्ट्रं सकलमपि हन्तुं जनगणम् ।
विपत्काले घोरे प्रबलतरुणानां कृतधियां
तदौचित्यं धत्ते न हसितमहो नापि रुदितम् ॥५॥

लाङ्गूलचालनैर्नित्यं पादत्राणावलेहनैः ।
को विहातुं समर्थः स्यात् प्राप्तं मन्त्रिपदं स्वयम् ॥६॥

धूम्रपानं चायपानं मद्यपानं धनाशनम् ।
को विहातुं समर्थोऽत्र नवमर्थचतुष्टयम् ॥७॥

शरदम्बुदगा सुरापगा यमुना वार्षिकतोयदप्रभा ।
अनवेक्ष्यविभा सरस्वती बत तासामिह भाति सङ्गमः ॥८॥

हलभृत्तनुभा हि जाह्नवी यमुना चक्रभृदङ्गसन्निभा ।
उभयोर्ननु गोपबालयोः प्रिययोरत्र विभाति सङ्गमः ॥९॥

गङ्गातरङ्गाः कलहंससन्निभाः पिकालितुल्या यमुनातरङ्गकाः ।
विभिन्नवर्णस्य खगव्रजस्य तत् प्रयागतीर्थेऽत्र विभाति सङ्गमः ॥१०॥



## गोमटेश्वरो बाहुबली

इन्द्रगिरिरिति प्रथितपर्वते कर्णाटकसंस्थिते,
दिगम्बरो जनमनोहरोऽयं कस्य विग्रहो विराजते ?
सजयोद्घोषं पूजयते यं जनतेयं बत नतमौलिः।
परमविरागी त्यागी योगी कोऽयं महाबली ? ॥१॥

शृणुत सज्जनाः ! चकितलोचनाः ! भावोदीरित-जयवचनाः !
विराजते सुप्रसन्नवदनः विमुक्तवसनो जितमदनः।
पुण्याचरणो गौराङ्गोऽयं गोमटेश्वरो बाहुबली ॥
जयति केवली बाहुबली ॥ ध्रु ण ॥२॥

ऋषभदेव इति पुराणविदितो विश्ववन्दितो मुनिर्महान्।
प्रथमस्तीर्थंकरो जिनेन्द्रो यस्य पिताऽऽसीत् किल भगवान्।
यदीयसुयशोमहसा सहसा म्लायतीव तारकावली ॥
जयति केवली बाहुबली ॥ ध्रु ण ॥३॥

प्राप्य पितू राज्यांशवैभवं मत्तोऽभूद् भरतो भ्राता।
युद्धे त्रिविधेऽप्येनं जेतुं, न किलासीत् तस्य क्षमता।
इति दिशि दिशि निनदतीव सततं यस्य विजयडिण्डिमावली ॥
जयति केवली बाहुबली ॥ ध्रु ण ॥४॥

बाहुबलार्जितमपि निजराज्यं तृणवद् येन परित्यक्तम् ।
निरस्तवेशं लुञ्चितकेशं गृहीतमुग्रं जिनव्रतम् ।
चकितमपश्यत् सुरेन्द्रस्य यं दिव्या दशशतनयनाली ॥
जयति केवली बाहुबली ॥ ध्रु णा ॥५॥

सेयमुदात्ता महामहिमताऽमूर्ता मूर्तिमतीह कृता ।
इन्द्रगिरिं संस्कृत्य पावनं कुशलशिल्पिना कलावता ।
तामभिषिञ्चति शतशतकुम्भैः भारतदेशो भाववली ॥
जयति केवली बाहुबली ॥ ध्रु णा ॥६॥



## महतामौदासीन्यम्

मूकायन्ते भृशकलकले कोकिला भेकवृन्दे
निष्पुष्पोऽसौ कुसुमबहले पारिजातो वसन्ते ।
ताराकान्ते नभसि सविता पश्चिमाद्रौ प्रशेते,
औदासीन्यं भजति हि महान् यत्र नीचोऽग्रगामी ॥

## सामर्थ्यं पावित्र्यञ्च

दावाग्निः स बिभर्ति जातु जटिलज्वालाजटालो महान्
सामर्थ्यं यदपि प्रचण्डतिमिरध्वंसक्षमं सर्वथा ।
पावित्र्यं तदसौ कुतः स लभतां नीराजनज्योतिषो
यत् तेजस्तनुतेऽतिमन्दमनिशं देवालयान्तर्गृहे ॥

## काव्यं सतां जीवनम्

माधुर्यं वचने स्फुटं व्यवहृतौ कारुण्यमत्युत्कटं
बोधव्यञ्जकतोत्तमा प्रतिपदं सच्छास्त्रनिष्ठा कथा ।
दोषः क्वापि कदापि नैव घटते नालंकृतौ चाग्रह-
स्तन्मन्येऽखिललोकनिर्वृतिकरं काव्यं सतां जीवनम् ॥

## रे धनुर्धर !

प्रावीण्यमाप्तुं खलु शब्दवेधे धनुर्धर स्याद् यदि ते मनीषा ।
मनोऽभिरामस्वरलुब्धलोको किं विध्यतेऽयं कलकण्ठकण्ठः ॥

नक्तं यद् यदवेक्षसे ननु सखे तेजोमयं दूरत-
स्तत् तत् सर्वमपि स्पृहार्हमिति मा मंस्थाः कदापि भ्रमात् ।
घोरेऽस्मिन् समये स्फुरन्ति तिमिरग्रस्ते जगन्मण्डले
दंष्ट्राः केसरिणां क्वचिच्च मणयो दीप्ताः क्वचिद् योगिनाम् ॥

श्रेयो मुहूर्तं ज्वलितं हि तेषां जीवन्ति ये गन्धगुणं विनैव ।
सुगन्धसारस्य तु चन्दनस्य धूमायितेनैव यशोविकासः ॥

कस्मान् मुधा भ्रमसि पर्वतमस्तकेऽस्मिन्
रत्नोत्तमानि यदि कामयसे सखे त्वम् ।
पाषाणसंकुलममुं हि विहाय यत्नै-
र्गाहस्व तज्जलनिधेस्तलमेव नीचैः ॥

रे सामुद्रिक भद्र मत्सुतकरे पश्य क्षणं लक्षणं
प्रायो गौरिव हिण्डतेऽयमनिशं नैवाऽस्य विद्यारुचिः ।
तद् वृद्धावचनं निशम्य सहसाऽदृष्ट्वैव तल्लक्षणं
स प्राहास्व ! सुतः सुनिश्चितमयं मन्त्री भवेद् भाग्यवान् ॥



# जयतु तत्त्वमद्वैतम्

विश्वमण्डले निखिले । जयतु तत्त्वमद्वैतम् ।
यदखण्डम्, यदनन्तम् । जयतु तत्त्वमद्वैतम् ॥ ध्रु० ॥

श्रुतिमन्त्रैरुद्गीतम् । वेदान्तैरतिशस्तम् ।
परमर्षिभिरनुभूतम् । जयतु तत्त्वमद्वैतम् ॥१॥

रज्जुसर्पनिभमखिलम् । दृश्यमानमचलचलम् ।
सकलविधापन्मूलम् । वदति तत्त्वमद्वैतम् ॥२॥

मृगतोयं विषयसुखम् । सौख्यं खल्वध्यात्मम् ।
सत्यमिदं विश्वहितम् । वदति तत्त्वमद्वैतम् ॥३॥

जगदुदयादि-निदानम् । द्रष्टुं परमात्मानम् ।
पश्यात्मन्यात्मानम् । वदति तत्त्वमद्वैतम् ॥४॥

जन्मजरामरणभयम् । कर्मफलं याति लयम् ।
स्वं मत्वा ह्यमृतमयम् । वदति तत्त्वमद्वैतम् ॥५॥

सम्प्रदाय-भेदानाम् । अन्योन्यद्वेषाणाम् ।
सकलकलहमूलानाम् । विलयार्थं यत् कथितम् ॥६॥
॥ जयतु तत्त्वमद्वैतम् ॥



# विज्ञान-पञ्चपदी

विज्ञानं विजयताम् । विज्ञानं विजयताम् ।
स्वतन्त्रनवभारते, नवीनं विज्ञानं विजयताम् ॥ ध्रु० ॥
गूढरहस्यम्, आकाशस्थम्
वायुवह्निजलपृथिवीसंस्थम् ।
परमर्षीणां यद् हृदयस्थम्
तत् साक्षात्कुर्वताम् । विज्ञानं विजयताम् ॥ स्वतंत्र० ॥१॥

अद्भुतमाया विश्वधारिणी
विश्वेश्वरसहधर्मचारिणी ।
स्थावरजङ्गमचिदचिज्जननी ।
तां प्रकटीकुर्वताम् । विज्ञानं विजयताम् ॥ स्वतंत्र० ॥२॥

सुखं विहरतां चन्द्रमण्डले ।
सञ्चरतां वा महार्णवतले ।
भूगोलं पश्यतां करतले ।
योगिजनानपि चमत्कुर्वताम् ।
विज्ञानं विजयताम् ॥ स्वतंत्र० ॥३॥

पुरातनमिदं प्रपञ्चजातम् ।
जीर्णशीर्णतां नितरां यातम् ।
नूतनयन्त्रैरभिनवतन्त्रैर्-
नवनिर्माणैर्नवीकुर्वताम् ।
विज्ञानं विजयताम् ॥ स्वतंत्र० ॥४॥

यन्त्रशक्तिमत्यन्तमद्भुताम् ।
वैद्युतशक्तिं जलकणनिहिताम् ।
परमां शक्तिं परमाणुगताम् ।
विश्वहितार्थं विनियोजयताम् ।
विज्ञानं विजयताम् ।
स्वतंत्रनवभारते नवीनं विज्ञानं विजयताम् ॥५॥

• •

# आनन्द झा

परम्परया सुगृहीतन्यायशास्त्रप्रकाण्डपाण्डित्याः श्रीझामहोदयाः काव्यनिर्माणेऽपि सुबहोः कालात् पटीयसीं प्रतिभां परिष्कुर्वन्ति। एतेषां कतिपयकाव्यरचनाः प्राकाश्यमुपेताः सहृदयानामोदभरितान् कुर्वन्ति।

आनन्दझाशर्मणि सम्प्रयाते
चेतःपथं कश्चिदुदेति मोदः।
साहित्यतर्कद्वयसामरस्यं
चमत्कृतेर्मूलमितः प्रमाणम् ॥

## समस्यापूर्तयः

वितन्वत्प्रेमाऽऽर्द्रान् प्रचुरतरमाधुर्यभरितान्
दिगन्तानानन्दाऽमृतजलधिकल्लोलकलितान्।
प्रबोधेन्दुज्योत्स्नाधवलिमहताऽशेषकुहका-
ऽऽकृतिव्रातान् शश्वज्जयति कविवाणीविलसितम् ॥१॥

रसाः शृङ्गाराद्याः समधिकसुखप्रापणपराः
न सन्देहस्यन्दो विमतिरपि कस्याऽपि कृतिनः।
स्थितिर्नैषा किन्तु प्रभवति यथाऽऽश्चर्यजनने
ऽद्भुते स्तब्धिप्रायो न हसितमहो नापि रुदितम् ॥२॥

येषामन्तर्मलविरहितं भव्यकाव्याऽमृताऽम्भो-
जातव्रातस्पृगिह भवति प्रोच्छलद्भूमिनानाम् ।
तेषामेषा कथितिरनघा श्रोतुमर्हा भवद्भिः
प्राप्ताऽऽस्वादः सरसकविता को विहातुं समर्थः ॥३॥

(मत्तमातङ्गदण्डकम्)

श्रीत्रिवेण्या बुधैर्दृश्यतां सङ्गमः, श्रीत्रिवेण्याः समैः स्तूयतां सङ्गमः, श्रीत्रिवेण्या न कैः पूज्यतां सङ्गमस्तत्कवीन्द्रैरये वर्ण्यतां सङ्गमस्तत्कवीन्द्रैरये ! वर्ण्यतां सङ्गमः ।

उत्तरादागता भाति गङ्गोज्ज्वला गोमुखात्तीर्थतो निर्गता चाऽऽगता श्रीहृषीकेशतीर्थं ततो निम्नगा नीलधारादिभेदं गता नैकशः श्रीहरिद्वारभूमिं गताऽनन्तरं ब्रह्मकुण्डं तता कनखलं चाऽऽगता कृत्रिमामेकधारां नवामाश्रिता कर्णपूर्भूमिपर्यन्तगामन्नदां या 'नहर' संज्ञया कथ्यते सज्जनैः स्वीयया धारया मुख्ययाऽऽलिङ्गितामङ्गराजप्रपुर्याः परं पूर्वमप्यादधाना विभिन्नासु भूमिष्वये ! तीर्थतां लोककल्याणसम्पादनव्यग्रतामावहन्ती क्रमान्निर्गता तीर्थराजे प्रयागेऽत्र वै निर्मले । श्रीत्रिवेण्या०

भानुजा वै कलिन्दाद् गिरेरुद्गमं प्राप्य तद्गोमुखात्तीर्थतः पश्चिमान्नीलमेघाभतोयौघवेगाऽऽकुला मन्यतां जाह्नवी सङ्गमार्थं च यं नैकभूमिं स्वसंयोगतस्तीर्थतां प्रापयन्ती दधानाऽथ गम्भीरतां रूपसाजात्यतो वासुदेवाऽन्वयप्रार्थनामादधाना गता माथुरीं भूमिमूर्जस्वलां प्राप्य वृन्दावनं राधिकाऽऽनन्दनं रासलीलामयं कृष्णचन्द्रोज्ज्वलं तत्परा क्रीडनानन्दसन्दोहतः पीवरत्वं गताऽप्येत्य लक्ष्यस्मृतिं सत्वरं सत्वरैर्भ्रं समेताऽऽगरां नागरीभिः समं नागरैः सङ्कते-

दीव्यमाना सुमानाऽथ संराजते, यत्र ताजोऽद्य नृपशाहजहांनिर्मितः पौर्णमास्यां निशि स्वीयवक्षःस्थले धारयत्यञ्जसा श्वेतपद्मोपमामाकृतिं यस्य देवी कलिन्दात्मजा तत्स्थलादागता नामरूपे विहायाऽथ तन्मेलनेनात्र मुक्तिं श्रयन्तीव सन्दृश्यताम्। श्रीत्रिवेण्या०

या तृतीया पुराणेषु हि श्रूयते दृश्यते नो परं गुप्तिमेता परा सर्वविज्ञाकच्छहृत्पद्मसद्मस्थितेरेत्य सा किं परित्यज्य तां गुप्ततां सत्कवीनां मुखाम्भोजमिन्दूज्ज्वला भ्राजते सर्वशुक्ला विभिन्ने स्थले, सैव भाति स्वतस्तीर्थराजे प्रयागेऽक्षयं तं वटं गोपयत्यञ्जसा दुर्गमध्ये स्वके श्रीकलिन्दात्मजायास्तटे शोभने। सत्यमेतन्नदीनामयं सङ्गमो दुर्लभोऽन्यत्र कुत्राऽपि भूमण्डले यत्र भूमिस्त्रिकोणाऽऽकृतिं बिभ्रती यन्त्राराजोपमा मार्गतो लक्ष्यते, कर्मभूमौ समैरेव भाव्यं सदा कर्मिभिर्नात्र संदेहलेशोऽप्यथे बोधयन्नेतदेवाऽधुना मन्यताम्, यत्र शेते हनूमानिदानीमपि प्राज्यपूजां प्रगृह्णन् परः कर्मठः। कथ्यते शारदाऽन्तर्जलाऽधो वहत्यस्य या पूर्वगा सैव काव्यत्वमाप्तो मुखाम्भोजतः सत्कवीनामगुप्ताऽभवन्निश्चितम्।

एकवेण्यप्ययं सुन्दरी शस्यते बद्धवेणीद्वया किं न वै शस्यताम्? चेत् त्रिवेणी परैणीदृगेतादृशीं किं पुनर्वर्ण्यतां वा कथं वर्ण्यताम्। सङ्गमोऽसौ त्रिवेण्याः स हि श्रूयते ब्रह्मणाऽप्यश्वमेधा दशाराधिताः, कुम्भमेला भवत्यत्र साद्याप्यहो यत्तुलां नाऽन्यमेला गता लभ्यते। श्रूयते भव्यकाश्मीरजो भूमिभृद्भ्रूणहा हर्षसम्वर्द्धनः सङ्गतः प्राकरोन्नैकवारं तुलादानमप्यत्र सौवर्णमेवं तुषाग्निं व्यधान्मिश्रकुम्मारिलो बौद्धविध्वंसकृत् वृद्धमीमांसको यस्य शिष्यो बभूवाऽथ भूमण्डनं मण्डनो मिश्रवर्यः कृतो येन वै शास्त्रजल्पः शिवस्याऽवतारेण तारस्वरेणाऽतितेजस्विनाऽऽचार्यवर्येण वै शङ्करेणाऽथ माहिष्मतीगामिना, यत्स्मृतिं कारयन्ती विभात्यञ्जसा कुम्भमेलागता सा हि

"साहो" तिनाम्ना समैर्वर्णिता नग्नसन्न्यासिदीर्घेत्र शोभामयी स्नानयात्रावगाहाय ननु सङ्गमे, तत् त्रिवेण्या समैर्दृश्यतां सङ्गमः श्रीत्रिवेण्या बुधैः स्तूयतां सङ्गमः, श्रीत्रिवेण्या जनैः पूज्यतां सङ्गमः, तत् कवीन्द्रैरयं वर्ण्यतां सङ्गमो वर्णित सङ्गमो दण्डकेनाऽमुनाऽऽनन्दनाम्ना प्रशस्तेन सत्तार्किकैः काव्यकृद्भिश्च विद्धिर्हि यद्दडकं भण्डकं भूमिखण्डस्य वै कथ्यते । सङ्गमः सङ्गमः, सङ्गमः सङ्गमः, सङ्गमः सङ्गमः, सङ्गमः सङ्गमः ।

० ०

# हरिदत्त शर्मा

(जन्मतिथिः २७-९-१९४८)

पूर्वं प्रदत्तपरिचयाः श्रीशर्माणः स्वरभावसंवलितकाव्यपाठनिर्माणशालिनः प्रयागीयेषु कविषु समुदीयमानाः सन्ति। एतेषां व्यक्तित्वं काव्येन काव्यञ्च व्यक्तित्वेन समरसतामापन्नमिव प्रतिभाति।

कविपुंस्कोकिलं मत्तं
हरिदत्तं न कः स्मरेत्।
यस्य कूजितमात्रेण
काव्योद्यानं विजृम्भितम्॥

## समस्यापूर्त्तयः

मृषावादोऽयं यद् विगतमृतभाषा सुरगवी
समेत्य प्रत्यक्षं ह्यनुभवतु यः प्रत्ययपरः।
यदस्मिन् सौधेऽद्य प्रचुररसभावैः सुभरिता
कवीन्द्राणां वाणी किरति सुरवाणीविलसितम्॥१॥

ऋषीणामाद्यानां श्रुतिवचनबीजैः प्रकटितं
सुशब्दैः संसिक्तं निगमतरुपुष्पैः सुरभितम्।
कवीनां सत्काव्यैः सुफलरसलाभेन फलितं
अहो! धन्यं मन्ये मधुरसुरवाणीविलसितम्॥२॥

स्नातायाता मनसिजपथे त्वं हि लावण्यराशौ
को दोषश्चेत् स्खलितमभजत् तत्र मुग्धं मनो मे ।
भावोद्याने प्रणयकलिका वर्धिता स्वातिसीमं
वाले ! जालं विततमधुना को विहातुं समर्थः ॥३॥

उत्कोचेन स्वगृहभरणं वर्धितं तुन्दिलत्वं
स्वेभ्यः सेवावितरणमहो भाषणं शोषणञ्च ।
हर्म्यं यानं पदमनुचराः चाटुकाराावृतत्वं
ज्ञातास्वादः सुखद 'कुरसीं' को विहातुं समर्थः ॥४॥

दिव्यानन्दोऽभिनवमधुरा कल्पनाचारुता च
व्यङ्ग्यैरर्थैः सुरसभरितैरुन्नता भावभूमिः ।
चान्द्री ज्योत्स्ना वनगहनता प्रावृषेण्या च धारा
ज्ञातास्वादो मधुरकवितां को विहातुं समर्थः ॥५॥

कटाक्षस्याघाते मधुरमधुरं वेधनमिव
प्रियालापे जाते तपनमनिशं कम्पपुलकौ ।
त्वदुत्कण्ठा दुःखं वितरति सुखं वेति कुतुकं
मयालि ! त्वत्प्रेम्णा न हसितमहो नापि रुदितम् ॥६॥

समक्षे हृत्कम्पो विरहसमये हा विकलता
समुत्पन्ने शूले हि पुनरभिलाषः सुखकरः ।
न शक्यादातुं तद् रस इति न हातुं रुगिति वा
हृदीश ! त्वत्प्रेम्णा न हसितमहो नापि रुदितम् ॥७॥

राष्ट्रं भारतमेकमेव सुदृढं पूतं ह्यखण्डात्मकम्,
अक्षीणा विमलात्र संस्कृतिसरिन्मूलं महत् संस्कृतम् ।
एकब्रह्मबहुस्वरूपधृतिवद् देशेऽत्र संशोभते
भाषा-वेष-विचार-वर्ण-जनन-प्रान्तीयता सङ्गमः ॥८॥

संसारे सुखदुःखयोः परगतौ वै ब्रह्मजीवात्मनोः
खे वा चक्रपतत्रिणोश्च विपिने फुल्लल्लतावृक्षयोः ।
राधामाधवयोर्व्रजे सुललितः काव्ये च शब्दार्थयो
रम्ये तीर्थपतौ प्रयागनगरे नद्योस्तथा सङ्गमः ॥९॥



## आगता कुतस्त्वम्

हिमभूतं मम मनो हि जडताग्रस्तं सुप्तम्
अयि वसन्तललने ललिते ! आगता कुतस्त्वम् ।
निष्पन्दं नीरवं सदासीन्मम प्राङ्गणम्
अयि प्रावृड्घनमाले ! विस्तारिता कुतस्त्वम् ॥

सोढं तपनं द्रवितं चित्तं
चाश्रुसमूहै रुदितं तेन ।
अन्तर्मुकुलं दग्धीभूतं
कृतसेचनमपि हृदयजलेन ॥
स्विन्नं मे मानसं क्षालितुं
जलकणिके ! पतिता कुतस्त्वम् ।
अयि प्रावृड्घनमाले..............

कम्पयमानो मे रोमालिं
ह्यवहद् वायुरयिद्हिमशीतः ।
धवलहिमैश्छादितो मदीयो
विषमाधिर्वेदनापरीतः ॥
दले दले ह्युन्मीलनकारिणि
पवनरमणि ! चालिता कुतस्त्वम् ।
अयि वसन्तललने................

चमत्कृत्य चाल्पं चपलावत्
किं यास्यति विलयं नवबाला।
सदा तिमिरसहचारकारिणी
भवसि न किं त्वं तारकमाला॥
एकस्फुरणेनैव सुदामिनि!
नभसान्तर्धारिता कुतस्त्वम्।
अयि प्रावृड्घनमाले...............

धवलविमलहासं वितरन्ती
सितवसने! किं पथि मे याता।
निश्चलहृदयोदधिः कम्पितः
भावतरङ्गैश्चलता जाता॥
भ्रमचक्रेऽस्मिन् शरच्चन्द्रिके!
प्रणयस्मृतिं प्रापिता कुतस्त्वम्।
अयि वसन्तललने...............

स्वश्रीसम्मोहने निबद्धं
प्रकृतिदेवि! मुग्धं मम हृदयम्।
आतपमपि रसमयं कुरु त्वं
धावनमस्तु न तृषितैः सरयम्॥
अपि विजने स्पन्दनमानेतुं
पिकमाले! चालिता कुतस्त्वम्।
अयि प्रावृड्घनमाले...............
अयि वसन्तललने...............

• •

## नलिनी शुक्ला

(जन्मतिथिः ४-६-१९४०)

सरसकोमलगीतिनिर्माणनिपुणा कोमलकण्ठशालिनी श्रीमती शुक्ला संस्कृतकाव्योद्यानस्य कोकिलेति नात्र काचिदत्युक्तिः । कानपुरस्थाचार्यनरेन्द्रदेव-महापालिकामहाविद्यालये संस्कृतप्रवक्तृपदमलङ्कुर्वाणयाऽनया कतिपये ग्रन्था लिखिताः । 'भावाञ्जलि'नाम्नी रचना, उत्तरप्रदेशसंस्कृताकादमीतो विशेषेण पुरस्कारेण सम्मानिता ।

सम्प्रति नलिनी शुक्ला
काव्योद्यानस्य कोकिला जाता ।
श्रावं श्रावं यस्याः
सुस्वरमामोदते लोकः ॥

### समस्यापूर्तिः

रसस्निग्धं सौख्यं प्रथयति सुधाब्धेरिव सदा
निरस्ताधीन् कृत्वा मदयति मधूनामिव मनः ।
किमेतत् तारुण्यं ललितललनालोलललनं
न चैवं तारुण्यं रुचिरमिह वाणीविलसितम् ॥१॥

कवीनां काव्येषु श्रवणपुटपेयं द्रुतिकरं
नयेष्वान्तर्वीणां सकलविधशास्त्रेष्वपि वरम् ।
प्रकाशो विज्ञानप्रभवविभवोज्जृम्भणफलं
विभिन्नाम्नायेषु प्रचुरतरवाणीविलसितम् ॥२॥



मधुरस्वरभावाकलितगीतेन सम्मोहनमिवातन्वानैका कवयित्री

स्मृतं शब्दब्रह्म प्रणव इति मन्त्रः परतरो
विजृम्भा यस्येदं विविधविधविश्वं पृथुतरम् ।
स्फुरन् षट्चक्रेषु प्रणिहितसमाधौ विजयते
पराद्याख्यं तत्त्वं सकलमपि वाणीविलसितम् ॥३॥

श्रुतीनां नादेन त्रिभुवनमिदं व्याप्य यदलं
श्रुतीनामानन्दं प्रदिशति विपञ्चीस्वरमिषात् ।
यथाम्नायाराध्यं विबुधमनुसेव्यं समधिया
सविद्यं साङ्गीतं स्फुरतु मयि वाणीविलसितम् ॥४॥



## गीतम्

अहो संस्कृते ! त्वं कुतो यासि रुष्टे ?
विमुग्धा इमे बालका बालिशत्वे ॥
अहो संस्कृते त्वं कुतो यासि रुष्टे ? ॥ ॥

क्षणं क्षम्यतां बालिशत्वं शिशूनाम् ।
समानीयतां सत्यमार्गे तु चैनान् ॥
कुबुद्धिर्यदा जायते संततिः स्वा
परित्यज्यते नैव रोषातुरत्वे ॥२॥

अहो संस्कृते.................
विचार्या त्वया सा पुरा भारतीया,
महिम्नोज्ज्वला विश्वपूज्या स्वकीया,
प्रकृष्टोन्नता ख्यातिरद्यापि गेया
गरिम्णा स्थिता भारते भाहि मुग्धे ॥३॥

( गरिम्णा स्थितिं भारते याहि मुग्धे ! )
अहो संस्कृते त्वम्.............



# गीतम्

स्नेहं वर्षय तेभ्यो येषां जीवनमार्तिपरीतम् ।
प्रेक्षागारे दर्शनयोग्यं मा कुरु निजकारुण्यम् ।
दर्पाशीविषदंशनशोच्यं मा कुरु निजतारुण्यम् ॥
क्लेशं कर्षय तेषां येषां सत्कर्माण्यवगीतम् ॥
स्नेहं वर्षय तेभ्यो येषां जीवनमार्तिपरीतम् ॥१॥

भोजा दीयन्ते धनिकेभ्यः को लाभः परमेषाम् ?
तुन्द्योच्छूनाः क्षुत्परिहीणाः, तृप्त्यै नालं तेषाम् ॥
अन्नैस्तोषय क्षुत्क्षामाङ्गान् विन्द चाशिषं कीर्तिम् ।
स्नेहं वर्षय तेभ्यो येषां जीवनमार्तिपरीतम् ॥२॥

अन्यायाग्नौ प्रज्वलितेभ्यः शोषणशूलहतेभ्यः ।
दैन्यागारे न्यस्तसुखेभ्यः तमसान्धौ[1] पतितेभ्यः ॥
दीपं दीपय सौख्यस्निग्धं जायुं (लेपं) लिम्प सुशीतम्
स्नेहं वर्षय तेभ्यो येषां जीवनमार्तिपरीतम् ॥३॥

● ●

---

१. अन्ध् + कु = अन्धुः = कूपः

# तट्टा नरसिंहाचार्यः

( जन्मतिथिः १-१-१९२५ )

आन्ध्रप्रदेशान्तर्गतगुडूरस्थश्रीनारसिंहसंस्कृतकलाशालायां प्राध्यापकाः श्रीनरसिंहाचार्यमहाशया गीर्वाणवाण्याः प्रतिभानसम्पन्नाः सुकवयः सन्ति । एतेषां यथा साहित्ये पाण्डित्यं प्रगाढं तथैव कवित्वमपि सहृदयहृदयावर्जकम् । 'साहित्यसुधालहरी' नाम्ना निबन्धसमुच्चय एतेषां विषये कामपीदृशीं भावनां द्रढयति ।

नरसिंहाचार्यास्ते
निजभङ्गीभणितिसिद्धवैदग्ध्याः ।
सुजनहृदयसन्धार्याः
कविसिंहाचार्यतामाप्ताः ॥

## समस्यापूर्तयः

हरशिरसि मनोज्ञे या स्थितिं प्राप नित्यं
नरकभिदि विधत्ते याऽधिकं भक्तिभावम् ।
सह वसति च ताभ्यां सर्वदा या स्रवन्ती
भुवि भवति हि तासां संगमस्सर्ववन्द्यः ॥१॥

सालङ्कारां सुगुणभरितां मञ्जुलालापयुक्तां
सत्सौन्दर्यां विनयसहितामीहितार्थप्रदात्रीम् ।
सौवर्णाढ्यां ललितपदविन्याससमात्राभिरामां
रामां यद्वद्द्रुहिणगृहिणीं को विहातुं समर्थः ॥२॥

महामेधायुक्तैः सुगुणखनिभिश्शास्त्रनिधिभिः
कलाभिज्ञैः प्राज्ञैर्जगदवनधुर्यैस्सुनिपुणैः ।
अमन्दानन्दाढ्यैरधिगतविवेकैः कविवरैः
समर्च्यं स्वादिष्टं जयतु तव वाणीविलसितम् ॥३॥

कलानिष्णातानामधिगतजगत्तत्त्वमहतां
पदे वाक्ये न्याये श्रुतिशिरसि भूरिश्रमवताम् ।
महाकाव्यारम्भप्रणयिजनशुश्रूषणवतां
कवीनां गोष्ठीयं कलयतु शुभानां शतशतीम् ॥४॥

वन्दारुभक्तजनमन्दारसिन्दुहिमकुन्दाभकीर्तिमतुला
नन्दाभिराममुनिबृन्दाभिगीतमरविन्दासनादिविनुतम् ।
वृन्दारकाभिनुतवृन्दावनीचरममन्दानुरागभरितं
नन्दात्मजातमरविन्दायताक्षमभिनन्दामि साम्प्रतमहम् ॥५॥

तमोहर्ता हंसाद्भुततनुविलोकीसुचपलां
सदा स्वोरोदेशे दधदखिलकालाभ्युदयभूः ।
महावातानाश्यस्तरणितनयातीरनिलये
द्रुमालम्बी कोपि प्रथयतु शिवान्नो जलधरः ॥६॥

## सीतास्वयंवरः

विश्वामित्रो विमलहृदयो विश्वमित्रत्वमिच्छन्
विश्वत्राणे विनिहितमतिः विश्वसन्विश्वशान्तिम् ।
विद्यावन्तौ विनयमधुरौ वीर्यवन्तौ कुमारौ
नीत्वा प्रापज्जनकनगरीं विश्रुतां विश्वभूषाम् ॥७॥

लोकाराध्यो जनकनृपतिर्वीक्ष्य लोकाभिरामं
रामं कामं कलितवपुषं सद्गुणाराममीड्यम् ।
सीतां मूर्तां श्रियमिव मनोहारिणीं चञ्चलाक्षीं
दातुं तस्मै मनसि चकमे लोककल्याणकांक्षी ॥८॥

सिद्धैस्साध्यैस्सुरमुनिगणैस्सेवितं दिव्यभव्यं
शैवं चापं नमयितुमयं बालकश्शक्नुयात्किम् ।
इत्थं चिन्ताकुलमतिरभूद्रूपशीलाभिरामां
पुत्रीं चित्तेऽमनुत जनको मूढधीर्मौनिबन्धः ॥९॥

शौर्योदार्यप्रथितयशसां भूभुजां पश्यतां स
श्रीमान्राजा शिवधनुरुपाहृत्य चक्रे प्रतिज्ञाम् ।
तस्मै सीतां सुगुणकलितां दातुमिच्छाम्यहं भो
यो वा शैवं धनुरिदमधिज्यं करोति स्वशक्त्या ॥१०॥

श्रुत्वा सर्वं निजभुजबलप्रत्यया जेतुमुत्का
आत्माश्लाघां मनसि दधतो मञ्जुलालापयुक्ताः ।
कृत्वा यत्नं विफलमनसो हन्त जाता दुरन्ताः
केषां युक्तानुचितसरणौ संप्रवृत्तिर्जनानाम् ॥११॥

मौन्यादेशाद्रघुवरसुतो भूसुतां वोढुकामः
शैवं चापं नमितमकरोल्लीलया स्वात्मवेदी ।
हस्तस्पर्शादथ भगवतस्तच्च भग्नं द्विधाभूत्
आत्मज्ञानी न चलति सदा नर्मणि स्वे ह्युदारे ॥१२॥

अच्छज्योत्स्ना शिशिरकिरणं सङ्गता सङ्गतिज्ञा
दिव्या गङ्गा जलनिधिमगादात्मरूपानुरूपम् ।
एवं विज्ञास्सुगुणगणनाप्रीतियुक्ता महान्तः
स्वाभिप्रायं युगपदखिलं सप्रहर्षं विवव्रुः ॥१३॥

साक्षात्कारं परमुपगतो ब्राह्मणो योगविद्वा
लक्ष्मीं प्राप्तः पुरुष इव वा पूर्वपुण्योदयेन ।
वाचं प्राप्तो जडमतिरिवाकस्मिकस्वप्रवृत्ति-
र्जातानन्दो जनकनृपतिर्नो ममौ स्वे शरीरे ॥१४॥

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मन्दाक्रान्ता जनकतनया रामचन्द्रस्य कण्ठे ।
हृद्यां चित्रां ललितमधुरां दिव्यमन्दारमालां
प्रीतिस्निग्धं नयनसुभगं चारुलीलं बबन्ध ॥१५॥

• •

## वि० श्री० रङ्गनाथाचार्यः

(जन्मतिथिः १५–१०–१९२३)

तमिलनाडुराज्ये सुगृहीतजन्मानः श्रीरामानुजवेदान्तस्य मीमांसाशास्त्रस्य च निरन्तरं परिशीलनपरायणाः श्रीमद्भगवच्चरणारविन्दचञ्चरीकतामापन्नाः श्रीमन्त आचार्यवर्या यदा कदा स्वकवित्वेन सहृदयानपि रञ्जयन्ति ।

भक्तिसेकपरिवर्धिता मुहुः
सत्प्रपत्तिफलपुष्पमण्डिता ।
जायतां सततमेव सद्विदां
रङ्गनाथकवितालता मुदे ।।

### समस्यापूर्तिः

दयालुर्लक्ष्मीशः सकलहितसम्पादनपर-
स्त्रयीं धर्मादींश्च प्रदिशति मुदा भूमिजनुषे ।
गुरुद्वारा ज्ञानं वितरति तथाऽप्यन्यहृदये
पतन्तं दृष्ट्वेमं न हसितमहो नापि रुदितम् ॥१॥

चिराल्लब्ध्वा कन्यां नववयसि निक्षिप्तसुपदां
मनोज्ञां सत्त्वाढ्यां विनयविमलां कृत्यनिपुणाम् ।
कुलीनायानङ्गप्रतिमवपुषे योग्यपतये
प्रदायास्याः पित्रा न हसितमहो नापि रुदितम् ॥२॥

## शूर्पणखा-प्रवेशः

(कम्बरामायणाश्रितः)

पल्लवमलक्तमतिप्रभमुदारं
पद्ममपि यत्पदरुचिं न हि विधत्ते ।
तादृशपदं रुचिररम्यगतियुक्तं
लास्यविधिना भुवि समर्पयति बाला ॥१॥

मञ्जुतरसिञ्जितसुनूपुरलसत्स-
त्पादयुगलेन ननु शोभयति भूमिम् ।
सुन्दरपदावलीविभूषितमयूरी-
चारुगतिराजितपदेव कलहंसी ॥२॥

पद्मजनिसम्भवशरीरभवजन्मा
शोभनसुमोल्लसितकान्तवृषवल्ली ।
स्वर्णमकरन्दयुतपङ्कजनिवासी
श्रीमहिमलोपिमुखकान्तिविलसन्ती ॥३॥

शूर्पणखयोगबलसम्पतितनामा
रावणशिरःकदनकार्यरतसृष्टिः ।
अभ्रतलनिःसरदतिज्वलितविद्युत्-
खण्ड इव भूमिपथमागतवतीव ॥४॥

गन्धयुतकल्पकतरुश्वसितवल्ली-
भव्यतमसुन्दरशरीरमिह लब्ध्वा ।
कामरसपूरितमनोज्ञतमवाणी
व्याहरति कोकिलकुलं सपदि जित्वा ॥५॥

श्यामां शश्वत् स्फुरितविचलत्पत्रभङ्गाभिरामां
रम्यां चञ्चद्भ्रमरकचयैर्दिव्यरागाभिपूर्णाम् ।
सान्द्रां गन्धच्छुरितरजसा लोलजालस्तनाग्रां
हस्ते कृत्वाऽनुनयविमुखः को विहातुं समर्थ ॥३॥

वासन्तीषु प्रथितसुमनस्सत्रशालासु तृप्ता-
मिष्टाहारैः श्रुतिहितगिरं व्याहरन्तीमुदाराम् ।
शाखारूढां द्विजपरिषदं केसरार्द्रक्षताढ्या-
माशासानां स्वशुभमनिशं को विहातुं समर्थः ॥४॥

हृद्यैर्भावैरुपचितरसैं रीतिवृत्तैरुदारा-
मोजोदीप्तां नवनवकलास्पन्दसौन्दर्यसान्द्राम् ।
विघ्नां शय्यां स्वयमिव वधूमुक्तिवैचित्र्यरम्यां
ज्ञातास्वादो मधुसुकवितां को विहातुं समर्थः ॥५॥

अम्लानप्रतिभाविकस्वरनवव्याहारभङ्गीमयं
मुद्रामुग्धमुदाररीतिमधुरं पात्रौचितीसुन्दरम् ।
युक्तिस्फीतमयत्नसिद्धललितालङ्काररोचिस्स्फरं
कस्योदात्तचरित्रशोभि सरसं न स्यान्मुदे वाङ्मयम् ॥६॥

आम्नानप्रतिभानभासुरपदन्यासस्फुरन्माधुरी-
धारास्पन्दमुदारबन्धमभितो लावण्यलीलायितम् ।
अक्लेशस्फुरितार्थसौभगमभिव्यक्ताभिजात्यं नवं
साहित्यं सुकुमारमार्गमसृणं न स्यान्मुदे कस्य वा ॥७॥

ऋजुवक्रोक्तिमयोपदेशललितं दिव्यानुभूतिप्रदं
समुदात्तीकृतमूलवृत्तिनिवहं सौन्दर्यमुद्राङ्कितम् ।
जनताजीवनदर्शनं रसगुणालङ्कारसारोज्ज्वलं
सुरवाणीलसितं जनाभ्युदयदं न स्यान्मुदे कस्य वा ॥८॥

वैचित्र्याद् विषयस्य दीप्तमसृणच्छायस्य सीमायितं
सत्त्वादेद्धतिदीप्तिविस्तरपरिस्रोतायितं चोद्गमात् ।
संविद्बोधवशात् परस्परभिदातीताद्वयानन्दधु
स्याद् वाणीलसितं चमत्कृतिमयं न प्रीतये कस्य वा ॥९॥



## रूपसूक्तम्

( रूप्यकस्य महिमा )

अयि रूप ! तव रूपमिह को नु जानाति
परिमातुमिदमित्थमिति को नु शक्नोति ।
अमितप्रभावस्य निरवधिकरूपस्य
नैपुणी तव रूप ! किमु वर्ण्यते मया
आबालगोपालमापामराभिज्ञ-
मखिलोऽपि तव नामपारायणे लगति ।
यत्रावलोकिते यत्रावकर्णिते
यत्रानुभाषिते यत्रोपयातेऽपि,
निस्समो महिमोपलक्ष्यते तव रूप !
कोटिरूपैरहो विष्णुवद् व्याप्नोषि
पारया बाधितुं धारया दुरितस्य
सुहृदामुदेजयाः प्रीता भवन्ति ते
तस्करो घातुकः कण्टको लुण्टको
वञ्चकस्सुजनोऽपि तव निमित्ते भवति
दण्डनानर्होऽपि दण्ड्यतामुपयाति
दण्ड्योऽपि मानवस्सम्मानमाप्नोति

त्वदनुग्रहामृतस्विन्नस्य पुरुषस्य
'संस्कृतावयि' रूप ! किमवशं वर्तेत
एकत्र कल्पयसि मन्दारनन्दनम्,
अन्यत्र विदधासि भग्नाटवीमपि;
एकदा किंकिणीकिणकिणात्कारेण
विश्वमपि नर्तयत् क्रीडसि स्वेच्छया,
एकदा हाहन्तकारेण विबुधमपि
खेदयन् मोदसे भुवि रूप ! बहुरूप
सौधमधिरोपयसि सौधान्निपातयसि
सकृदेव किन्न रूप ! तव विचित्रा गतिः
अस्थिरा तव गतिर्निःस्वस्य वाञ्छेव
कामिनीचित्तमिव तव रतं चञ्चलम्
क्रूरोऽपि दुष्टोऽपि सेवानभिज्ञोऽपि
निर्वाचितो भवति रूप ! तव मायया
तव विना करुणया सामान्यमपि रूप !
उद्योगमाप्नोति न च पट्टभद्रोऽपि
दुर्बलः पुरुषोऽपि दुस्साध्यमपि कर्म
कर्तुमीष्टे रूप ! तव दयालेशतः
तव दयाया ऋते शक्तोऽपि मानवः
सुकरमपि तत् कर्म कर्तुं न शक्नोति
हन्तुमायातोऽपि शान्तचित्तस्सपदि
भृत्यायते नरस्तव महिम्ना रूप ।

सारसननूपुरमणीन्द्रनिनदेन
मस्तकलसत्कुसुमभृङ्गरसितेन ।
आसरति नूनमिह दिव्यतरकन्ये-
त्याकलयदर्ककुलरत्नमणिदीपः ॥६॥

देवकुलदत्तमतिसारममृतं यत्
चूचुकलसत्कुचयुगेन मिलितं सत् ।
आगतमपश्यदतिसुन्दरसुरूपो
दाशरथिरात्मरतिरागमविचेयः ॥७॥

छिद्रमयनागभुवि निर्जरनिवासे
मध्यभुवि कुत्रचिदलभ्यरुचिरूपा ।
सञ्चरति केयमिह निन्दितरतिश्रीः
कोसलकुमार इति चेतसि चकार ॥८॥

राममुखपद्मनिहिताक्षियुगभृङ्गा
कामरससागरभरालसगतेन ।
राममुपगम्य करपल्लवयुगेन
प्राणमदनन्यमतिरुत्तमगुणाब्धिम् ॥९॥

आगमनमस्तु तव शोभनमिहास्मद्-
भाग्यवशतो हि भवतीदृशविपाकः ।
को हि जनको रमणि का च जनयित्री
नाम च वदेति कमलापतिरुवाच ॥१०॥

• •

# श्रीभाष्यं विजयसारथिः

आन्ध्रप्रदेशान्तर्गत'वारंगल'स्थ-एस० वी० एस० ए० महाविद्यालये संस्कृत-प्राध्यापकाः श्री विजयसारथिमहाशयाः संस्कृतजगति स्वकीयेन 'मन्दाकिनी'-नाम्ना सुललितेन लोकगीतपद्धत्या निर्मितेन सहजप्रवाहपरिकलितेन काव्येन नचिरादेव प्रसिद्धिमुपगताः सन्ति । सङ्गीतमाधुरीसंवलिता काव्यपाठकलाऽ-प्येतेषां कविसम्मेलनस्थान् सहृदयान् निरतिशयानन्दगद्गदान् कुरुत इति तेषां विषये भूतार्थव्याहृतिरेव, न स्तुतिः ।

विजयसारथिवाक्परिमण्डिता
सुजनमान्यगुणा सदलङ्कृतिः ।
परिणता रसनीयपरावधिः
सुकविता जनयत्यधिकां मुदम् ॥

## समस्यापूर्तयः

वल्गूयन्तीमजिररजसा धूसरैरप्युदारै-
रङ्गैर्दीप्रां लुलितललितैः फालभागे विशीर्णैः ।
किञ्चिल्लोलैश्चिकुरनिकरैश्चुम्बनीयां तनूजा-
मादायार्धस्फुटितवचनां को विहातुं समर्थः ॥१॥

मन्दं मन्दं गृहपरिसरे विक्षिपन्तीं पदानि
व्यादायास्यं किमपि वदितुं चेष्टमानां वितर्याम् ।
भ्रंशात् सद्यो रुदितहसितैर्मुग्धमुग्धां तनूजा-
मङ्के कृत्वाऽनुनयविमुखः को विहातुं समर्थः ॥२॥

श्यामां शश्वत् स्फुरितविचलत्पत्रभङ्गाभिरामां
रम्यां चञ्चद्भ्रमरकचयैर्दिव्यरागाभिपूर्णाम् ।
सान्द्रां गन्धच्छुरितरजसा लोलजालस्तनाग्रां
हस्ते कृत्वाऽनुनयविमुखः को विहातुं समर्थ ॥३॥

वासन्तीषु प्रथितसुमनस्सत्रशालासु तृप्ता-
मिष्टाहारैः श्रुतिहितगिरं व्याहरन्तीमुदाराम् ।
शाखारूढां द्विजपरिषदं केसरार्द्रश्रताढ्या-
माशासानां स्वशुभमनिशं को विहातुं समर्थः ॥४॥

हृद्यैर्भावैरुपचितरसै रीतिवृत्तैरुदारा-
मोजोदीप्रां नवनवकलास्पन्दसौन्दर्यसान्द्राम् ।
विन्नां शय्यां स्वयमिव वधूमुक्तिवैचित्र्यरम्यां
ज्ञातास्वादो मधुसुकवितां को विहातुं समर्थः ॥५॥

अम्लानप्रतिभाविकस्वरनवव्याहारभङ्गीमयं
मुद्रामुग्धमुदाररीतिमधुरं पात्रौचितीसुन्दरम् ।
युक्तिस्फीतमयत्नसिद्धललितालङ्काररोचिस्स्फरं
कस्योदात्तचरित्रशोभि सरसं न स्यान्मुदे वाङ्मयम् ॥६॥

आज्ञानप्रतिभानभासुरपदन्यासस्फुरन्माधुरी-
धारास्पन्दसुदारवन्धमभितो लावण्यलीलायितम् ।
अक्लेशस्फुरितार्थसौभगमभिव्यक्ताभिजात्यं नवं
साहित्यं सुकुमारमार्गमसृणं न स्यान्मुदे कस्य वा ॥७॥

श्रीभाष्यं विजयसारथिः

ऋजुवक्रोक्तिमयोपदेशललितं दिव्यानुभूतिप्रदं
समुदात्तीकृतमूलवृत्तिनिवहं सौन्दर्यमुद्राङ्कितम् ।
जनताजीवनदर्शनं रसगुणालङ्काररसारोज्ज्वलं
सुरवाणीलसितं जनाभ्युदयदं न स्यान्मुदे कस्य वा ॥८॥

वैचित्र्याद् विषयस्य दीप्तप्रसृमरणच्छायस्य सीमायितं
सत्त्वादेद्दतिदीप्तिविस्तरपरिस्रोतायितं चोद्गमात् ।
संविद्वोधवशात् परस्परभिदातीताद्वयानन्दधु
स्याद् वाणीलसितं चमत्कृतिमयं न प्रीतये कस्य वा ॥९॥



# रूपसूक्तम्

( रूप्यकस्य महिमा )

अयि रूप ! तव रूपमिह को नु जानाति
परिमातुमिदमित्थमिति को नु शक्नोति ।
अमितप्रभावस्य निरवधिकरूपस्य
नैपुणी तव रूप ! किमु वर्ण्यते मया
आबालगोपालमापामराभिज्ञ-
मखिलोऽपि तव नामपारायणे लगति ।
यत्रावलोकिते यत्रावकर्णिते
यत्रानुभाषिते यत्रोपयातेऽपि,
निस्समो महिमोपलक्ष्यते तव रूप !
कोटिरूपैरहो विष्णुवद् व्याप्नोषि
पारया बाधितुं धारया दुरितस्य
सुहृदामुदेजयाः प्रीता भवन्ति ते
तस्करो घातुकः कण्टको लुण्टको
वञ्चकस्सुजनोऽपि तव निमित्ते भवति
दण्डनानर्होऽपि दण्ड्यतामुपयाति
दण्ड्योऽपि मानवस्सम्मानमाप्नोति

त्वदनुग्रहामृतस्निग्धस्य पुरुषस्य
'संसृतावयि' रूप ! किमवशं वर्तेत
एकत्र कल्पयसि मन्दारनन्दनम्,
अन्यत्र विदधासि भग्नाटवीमपि;
एकदा किंकिणीकिणकिणात्कारेण
विज्ञमपि नर्तयत् क्रीडसि स्वेच्छया,
एकदा हाहन्तकारेण विबुधमपि
खेदयन् मोदसे भुवि रूप ! बहुरूप
सौधमधिरोपयसि सौधान्निपातयसि
सकृदेव किन्नु रूप ! तव विचित्रा गतिः
अस्थिरा तव गतिर्निस्वस्य वाञ्छेव
कामिनीचित्तमिव तव रतं चञ्चलम्
क्रूरोऽपि दुष्टोऽपि सेवानभिज्ञोऽपि
निर्वाचितो भवति रूप ! तव मायया
तव विना करुणया सामान्यमपि रूप !
उद्योगमाप्नोति न च पट्टभद्रोऽपि
दुर्बलः पुरुषोऽपि दुस्साध्यमपि कर्म
कर्तुमीष्टे रूप ! तव दयालेशतः
तव दयाया ऋते शक्तोऽपि मानवः
सुकरमपि तत् कर्म कर्तुं न शक्नोति
हन्तुमायातोऽपि शान्तचित्तस्सपदि
भृत्यायते नरस्तव महिम्ना रूप ।

सारसननूपुरमणीन्द्रनिनदेन
मस्तकलसत्कुसुमभृङ्गरसितेन ।
आसरति नूनमिह दिव्यतरकन्ये-
त्याकलयदर्ककुलरत्नमणिदीपः ॥६॥

देवकुलदत्तमतिसारममृतं यत्
चूचुकलसत्कुचयुगेन मिलितं सत् ।
आगतमपश्यदतिसुन्दरसुरूपो
दाशरथिरात्मरतिरागमविचेयः ॥७॥

छिद्रमयनागभुवि निर्जरनिवासे
मध्यभुवि कुत्रचिदलभ्यरुचिरूपा ।
सञ्चरति केयमिह निन्दितरतिश्रीः
कोसलकुमार इति चेतसि चकार ॥८॥

राममुखपद्मनिहिताक्षियुगभृङ्गा
कामरससागरभरालसगतेन ।
राममुपगम्य करपल्लवयुगेन
प्राणमदनन्यमतिरुत्तमगुणाब्धिम् ॥९॥

आगमनमस्तु तव शोभनमिहास्मद्-
भाग्यवशतो हि भवतीदृशविपाकः ।
को हि जनको रमणि का च जनयित्री
नाम च वदेति कमलापतिरुवाच ॥१०॥

• •

# श्रीभाष्यं विजयसारथिः

आन्ध्रप्रदेशान्तर्गत'वारंगल'स्थ-एस० वी० एस० ए० महाविद्यालये संस्कृत-प्राध्यापकाः श्री विजयसारथिमहाशयाः संस्कृतजगति स्वकीयेन 'मन्दाकिनी'-नाम्ना सुललितेन लोकगीतपद्धत्या निर्मितेन सहजप्रवाहपरिकलितेन काव्येन नचिरादेव प्रसिद्धिमुपगताः सन्ति । सङ्गीतमाधुरीसंवलिता काव्यपाठकलाऽप्येतेषां कविसम्मेलनस्थान् सहृदयान् निरतिशयानन्दगद्गदान् कुरुत इति तेषां विषये भूतार्थव्याहृतिरेव, न स्तुतिः ।

विजयसारथिवाक्परिमण्डिता
सुजनमान्यगुणा सदलङ्कृतिः ।
परिणता रसनीयपरावधिः
सुकविता जनयत्यधिकां मुदम् ॥

## समस्यापूर्तयः

वल्गूयन्तीमजिररजसा धूसरैरप्युदारै-
रङ्गैर्दीप्रां लुलितललितैः फालभागे विशीर्णैः ।
किञ्चिल्लोलैश्चिकुरनिकरैश्चुम्बनीयां तनूजा-
मादायार्धस्फुटितवचनां को विहातुं समर्थः ॥१॥

मन्दं मन्दं गृहपरिसरे चिक्षिपन्तीं पदानि
व्यादायास्यं किमपि वदितुं चेष्टमानां वितर्द्याम् ।
भ्रंशात् सद्यो रुदितहसितैर्मुग्धमुग्धां तनूजा-
मङ्के कृत्वाऽनुनयविमुखः को विहातुं समर्थः ॥२॥

श्यामां शश्वत् स्फुरितविचलत्पत्रभङ्गाभिरामां
रम्यां चञ्चद्भ्रमरकचयैर्दिव्यरागाभिपूर्णाम् ।
सान्द्रां गन्धच्छुरितरजसा लोलजालस्तनाग्रां
हस्ते कृत्वाऽनुनयविमुखः को विहातुं समर्थ ॥३॥

वासन्तीषु प्रथितसुमनस्सत्रशालासु तृप्ता-
मिष्टाहारैः श्रुतिहितगिरं व्याहरन्तीमुदाराम् ।
शाखारूढां द्विजपरिषदं केसरार्द्रक्षताढ्या-
माशासानां स्वशुभमनिशं को विहातुं समर्थः ॥४॥

हृद्यैर्भावैरुपचितरसै रीतिवृत्तैरुदारा-
मोजोदीप्रां नवनवकलास्पन्दसौन्दर्यसान्द्राम् ।
विघ्नां शय्यां स्वयमिव वधूमुक्तिवैचित्र्यरम्यां
ज्ञातास्वादो मधुसुकवितां को विहातुं समर्थः ॥५॥

अम्लानप्रतिभाविकस्वरनवव्याहारभङ्गीमयं
मुद्रामुग्धमुदाररीतिमधुरं पात्रौचितीसुन्दरम् ।
युक्तिस्फीतमयत्नसिद्धललितालङ्काररोचिस्स्फरं
कस्योदात्तचरित्रशोभि सरसं न स्यान्मुदे वाङ्मयम् ॥६॥

आज्ञानप्रतिभानभासुरपदन्यासस्फुरन्माधुरी-
धारास्पन्दमुदारबन्धमभितो लावण्यलीलायितम् ।
अक्लेशस्फुरितार्थसौभगमभिव्यक्ताभिजात्यं नवं
साहित्यं सुकुमारमार्गमसृणं न स्यान्मुदे कस्य वा ॥७॥

ऋजुवक्रोक्तिमयोपदेशललितं दिव्यानुभूतिप्रदं
समुदात्तीकृतमूलवृत्तिनिवहं सौन्दर्यमुद्राङ्कितम् ।
जनताजीवनदर्शनं रसगुणालङ्कारसारोज्ज्वलं
सुरवाणीलसितं जनाभ्युदयदं न स्यान्मुदे कस्य वा ॥८॥

वैचित्र्याद् विषयस्य दीप्तमसृणच्छायस्य सीमायितं
सत्त्वादेद्धतिदीप्तिविस्तरपरिस्रोतायितं चोद्गमात् ।
संविद्बोधवशात् परस्परभिदातीताद्वयानन्दधु
स्याद् वाणीलसितं चमत्कृतिमयं न प्रीतये कस्य वा ॥९॥



## रूपसूक्तम्

( रूप्यकस्य महिमा )

अयि रूप ! तव रूपमिह को नु जानाति
परिमातुमिदमित्थमिति को नु शक्नोति ।
अमितप्रभावस्य निरवधिकरूपस्य
नैपुणी तव रूप ! किमु वर्ण्यते मया
आबालगोपालमापामराभिज्ञ-
मखिलोऽपि तव नामपारायणे लगति ।
यत्रावलोकिते यत्रावकर्णिते
यत्रानुभाषिते यत्रोपयातेऽपि,
निस्समो महिमोपलक्ष्यते तव रूप !
कोटिरूपैरहो विष्णुवद् व्याप्नोषि
पारया बाधितुं धारया दुरितस्य
सुहृदामुदेजयाः प्रीता भवन्ति ते
तस्करो घातुकः कण्टको लुण्टको
वञ्चकस्सुजनोऽपि तव निमित्ते भवति
दण्डनानर्होऽपि दण्ड्यतामुपयाति
दण्ड्योऽपि मानवस्सम्मानमाप्नोति

त्वदनुग्रहामृतस्त्रिन्नस्य पुरुषस्य
'संसृतावयि' रूप ! किमवशं वर्तत
एकत्र कल्पयसि मन्दारनन्दनम्,
अन्यत्र विदधासि भग्नाटवीमपि;
एकदा किंकिणीकिणकिणात्कारेण
विज्ञमपि नर्तयत् क्रीडसि स्वेच्छया,
एकदा हाहन्तकारेण विबुधमपि
खेदयन् मोदसे भुवि रूप ! बहुरूप
सौधमधिरोपयसि सौधान्निपातयसि
सकृदेव किन्न रूप ! तव विचित्रा गतिः
अस्थिरा तव गतिर्निस्स्वस्य वाञ्छेव
कामिनीचित्तमिव तव रतं चञ्चलम्
क्रूरोऽपि दुष्टोऽपि सेवानभिज्ञोऽपि
निर्वाचितो भवति रूप ! तव मायया
तव विना करुणया सामान्यमपि रूप !
उद्योगमाप्नोति न च पङ्कभद्रोऽपि
दुर्बलः पुरुषोऽपि दुस्साध्यमपि कर्म
कर्तुमीष्टे रूप ! तव दयालेशतः
तव दयाया ऋते शक्तोऽपि मानवः
सुकरमपि तत् कर्म कर्तुं न शक्नोति
हन्तुमायातोऽपि शान्तचित्तस्सपदि
भृत्यायते नरस्तव महिम्ना रूप ।

तत्क्षणं रोदयसि तत्क्षणं मोदयसि
तत्क्षणं कोपयसि तत्क्षणं प्रीणयसि
अन्योन्यमात्सर्यमुद्भाव्य चैकदा
पादप्रहारैकखेलया तृप्यसि
पत्यौ कलत्रस्य वैरमुत्पादयसि
द्वेषमापादयसि पत्युः कलत्रेऽपि
सोदरेष्वपि तथा जनकयोरपि रूप !
मानुषं पाषाणहृदयमेव करोषि
मित्रेऽपि शात्रवं शत्रौ च मित्रताम्,
उद्भाव्य मानवं क्रीडाशकुन्तवत्
परिकल्प्य मोदसे परिभवसि परिहससि
क्रीडसि प्रतिदिनं कूर्दसि स्वेच्छया
भूपायते कोऽपि भृत्यायते कोऽपि
धीरायते कोऽपि भीरूयते कोऽपि
तव दङ्निपातस्य तारतम्येनेव,
उच्चावचं भवति जगदिदं परिणतम्
शिंघाणपिञ्जूषदूषिकास्यन्दिनी-
पामादिदूषितं शरणं प्रपद्यसे
गुणरूपभारतीसुन्दरे धीरेऽपि
जातिवैरं सदाऽऽविष्करोष्ययि रूप !
बन्धुहीनस्यापि बन्धूयते जनः
संवाहयति रूप ! भृत्यवत् पादमपि



सर्वाङ्गीणमिवालिङ्गता गम्भीरेण काव्यपाठेन सम्मुग्धाः सचेतसः

तरुणमपि वृद्धमिव विदधासि वृद्धमपि
तरुणमिव कल्पयसि मानवं बहुमान्य !
स्वस्थमपि रुग्णमिव रुग्णमुल्लाघमिव
कल्पयसि मायया मानवं बहुरूप !
हालाहलेऽमृतं गरलमप्यमृते च,
उत्पाद्य तत्क्षणं त्वमिह केलायसि
चन्द्रातपे तमस्तमसि चन्द्रातपम्
निष्पाद्य तत्क्षणादानन्दमनुभवसि
अक्षरानज्ञोऽपि सेव्यायते कोऽपि,
अक्षराभिज्ञोऽपि सेवकीयति कोऽपि,
सद्गुणा दुर्गुणा दुर्गुणास्सद्गुणाः
व्यत्यासमनुयान्ति तव मायया रूप !
एकत्र लघुरूपमन्यत्र गुरुरूप-
मपरत्र सदसच्च परिधारयसि रूप !
एकतश्चारभ्य शतकोटिकोटिशः
रूपैर्विनोदयसि स्वपदाश्रितान् रूप !
लीलायितं रूप बहुरूपतामेति
वैरायितं रूप बहुरूपतामेति
सत्कृतौ दुष्कृतौ सज्जने दुर्जने
समभाव एवास्ति समवादिवत् तव
सोऽभिजातायते स तु विधिज्ञायते
स वदावदायते यस्य दयसे रूप !

इन्द्रन्ति चन्द्रन्ति धनदन्ति धर्मन्ति
पुष्पबाणन्ति ते येषां प्रसीदसि
विषमेक्षणेन यदि वीक्षसे जगदिदं
प्लुष्टं भवेदेव प्लुष्टं भवेदेव
दृशया प्रसन्नयाऽऽलोकसे यदि जगत्
नूनममृतं भवति नूनममृतं भवति
नाहं स्मरामीति नाहमिच्छामीति
त्वामब्रुवाणस्तु न क्वापि दृश्यते
मन्यसे यदि रम्यमाकाशहर्म्यमपि
निर्माय मानवं विस्मये मज्जयसि
मन्यसे यदि रूप ! चन्द्रगोलस्यापि
सोपानसंहतिं निर्मासि तत्क्षणम्
विग्रहाराधनद्वेषिणो ये केऽपि
तव विग्रहं रूप ! मनसा समर्चन्ति
चार्वाकभावुका अपि रूप ! नास्तिका
अस्त्यदृष्टं चेति विश्वसन्ति ध्रुवम्
श्रुतिपुराणागमप्रावर्तनं भवति
काननाक्रन्दनं नापि दयसे यस्य
भस्माज्यधारेव देवतोपासना
व्यर्थप्रयासाय कल्पते जनिमताम्
अलमलं तददृश्यदेवतापूजया
दृश्यमानं रूपदैवतं संस्मरत

प्रत्यक्षदैवतं त्वां रूप ! परिहाय
बुद्धिहीना जना अन्यानुपासते
विष्णुरिति शम्भुरिति पद्मेति गौरीति
कविवञ्चकैर्वयं वञ्चिता ननु रूप !
यत्कृपालेशतः सुखशान्तिसंपदः
प्राप्नुवन्ति प्रजास्तद् रूपमाश्रये
निन्द्यमपि विदधाति मान्यमिव यद्दया
तद्रूपदैवतं संजपत संजपत
पामरं विदधाति पण्डितं यद्दया
तद् रूपदैवतं संजपत संजपत
त्वामेव पश्यामि सर्वतस्सर्वदा
न त्वया विरहितं किञ्चिदपि वर्तते
जगदेकमूलमिति जगदेकसारमिति
जगदेकशरणमिति भावये त्वामेव
ब्रह्मासि विष्णुरसि रुद्रोऽसि शक्रोऽसि
वह्निरसि मृत्युरसि विश्वरूपस्त्वमसि
तृष्णाम्भसि प्रबलकामानिलोद्भूत-
मोहोर्मिसंकुले भामाभ्रमाश्रिते
सहजबन्धुग्राहसंघाकुले घोर-
संसारसागरे नः परं मज्जताम्
अयि रूप ! तावकीं देहि करुणातरीम्,
देहि करुणातरीम्, अयिरूप ! तावकीम् ।

● ●

## रामरूप पाठकः

( २६-१२-१८९१—२८-६-१९७३ )

विहारराज्यान्तर्गतसहसरामनगरे सुगृहीतजन्मनां चित्रकाव्यकौतुकाख्य-रचनया १९६७ खिस्ताब्दे लब्धसाहित्याकादेमीपुरस्काराणां सरसकोमलकाव्य-निर्माणेन सुमनोजनहृदयहारिणां सारल्यमूर्तीनां स्व० चित्रकविपण्डितरामरूप-पाठकानां कतिपयानि भक्तिसुधाकलितानि पद्यानि प्रस्तूयन्ते ।

लुप्तप्रायनवीनबन्धरचनासञ्जीवनं तन्वते
श्रीमद्भारतशासनार्पितमहासम्मानसीमाजुषे ।
शुद्धान्तःकरणाय कीर्तितरुणीलीलाविलासस्पृशे
सोल्लासं मम रामरूपकवये सोऽयं प्रणामाञ्जलिः ॥

—पण्डितश्रीबटुकनाथशास्त्रिणाम्

प्रफुल्लनीलोत्पलनीलविग्रहं
प्रतप्तचामीकरपिङ्गलाम्बरम् ।
विमोहयन्तीं व्रजदारकेकिनीः
सुवादयन्तं मुरलीं मनोहराम् ॥१॥

विलोलसौम्येक्षणवारिधारया
निषेचयन्तं शुभराधिकास्थलीम् ।
सुरेश्वरं सेवकसस्यजीवनं
नमामि कृष्णं घनरूपधारिणम् ॥२॥ (इति युग्मम्)

सदैव पद्माकरपद्मलालितं
महेन्द्रमौलेर्मणिराजिराजितम् ।
भुजङ्गनाथादिकसुज्ञसंस्तुतं
भजे श्रियै श्रीहरिपादपङ्कजम् ॥३॥

पयोधिजाकङ्कणरत्नतारकैः
विराजितः पद्मकुरङ्गचिह्नितः ।
विरिञ्चिहर्षाब्धिजपूरवर्द्धको
महेन्द्रचक्षुःकुमुदं प्रफुल्लयन् ॥४॥

विहङ्गमाधीशचकोरवल्लभो
वियोगिरक्षःकुलमूलनाशकः ।
सुखैकदाता हरिपादचन्द्रमा
मदीयचित्तस्थतमो विनाशयेत् ॥५॥

नीलाब्जसुन्दरतनुं धृतपीतवस्त्रं
सीतापतिं परमसौख्यकरं दयालुम् ।
श्रीवायुनन्दनमनोऽम्बुजवासिनं तं
श्रीरामचन्द्रमनिशं हृदये स्मरामि ॥६॥

प्राणप्रियं जनकभूपसुताचकोर्या
ध्वान्तापहं स्वजनचित्तनभोऽङ्गणस्य ।
शोभानिधिं दशरथार्णवहर्षहेतुं
श्रीरामचन्द्रमुखचन्द्रमहं स्मरामि ॥७॥

श्रीमैथिलेन्द्रतनयाहृदयाब्धिवासि-
श्रीरामचन्द्रचरणाम्बुजगर्भमध्ये ।
लोकैकमङ्गलनिधानकृपासुगन्धैः
सन्तर्पिताखिलजने वस चित्तभृङ्ग ॥८॥

सौभाग्यशालिजनचित्तसरोजवासौ
वज्राम्बुजाङ्कुशमनोहरलक्ष्मभाजौ ।
श्रीवायुनन्दनकराम्बुजलालितौ च
श्रीरामचन्द्रचरणौ शरणं सदा मे ॥९॥

इन्द्रादिदैवतसुसेवितपादपद्मं
सृष्टिस्थितिप्रलयहेतुमनादिदेवम् ।
भक्ताय भक्तिसुभगं करुणासमुद्रं
श्रीशङ्करं शरणदं शरणं प्रपद्ये ॥१०॥

गिरिवरगृहमध्ये मण्डपं मण्डयन्तं
प्रमुदितसुरहर्षैर्हर्षितं नागहारम् ।
त्रिभुवनजनयित्र्याः पीडयन्तं च पाणिं
शिशुशशिधरदेवं सर्वदा शं प्रयाचे ॥११॥

वृषारूढ ईशो भवानीसहायो
जटामध्यगङ्गाधरः कुन्ददेहः ।
ललाटौषधीशो ममाग्रे विराजन्
सुखी पुत्र भूयाः कदा मां ब्रवीति ॥१२॥

मुकुन्दप्रिये भक्तकल्याणकर्त्रि
महालक्ष्मि हे मन्दभाग्यं सुभाग्यम् ।
महानिर्गुणं मां गुणाढ्यं कुरुष्व
शिवे सप्तलोकैकधात्री त्वमेव ॥१३॥

पद्मासने जननि हे तव पादपद्मं
श्रीसौख्यभक्तिरसरूपसुगन्धपूर्णम् ।
संख्याविहीनजननैरभिवाञ्छितं यत्
प्राप्याधुना मम मनोभ्रमरः कृतार्थः ॥१४॥

त्रिभुवनजननीं त्रिलोकधात्रीं
रभसविनाशितभक्तदुःखजालाम् ।
मधुरिपुहृदये कृताधिवासां
जलधिसुतां शरणं सदा प्रपद्ये ॥१५॥

सौख्यस्थानकृपाकटाक्षपयसा हे लक्ष्मि मां स्नापय
श्रीविश्वेश्वरि मालिकां शिरसि मे स्वीयाद् गलादर्पय ।
पादाम्भोजपरागजं सुतिलकं भाले मदीये कुरु
मातश्छत्रसमञ्च हस्तकमलं मन्मस्तके स्थापय ॥१६॥

मातः सरस्वति भवच्चरणे नतोऽहं
तद्भूषणस्थमणिभाच्छुरितं स्वभालम् ।
जिष्णुं किरीटमणिराजितराजभालं
स्मृत्वा विधेः सदसतौ नहि वेद्मि वर्णौ ॥१७॥

• •

# रामलखन शर्मा

( जन्मतिथिः ६-१०-१९१७ )

इटावाजनपदान्तर्गते पौराणिके चकरनगराख्ये ग्रामे सनाढ्यवंशोद्भवः। एम० ए०, पीएच० डी०, आचार्यपदवीञ्च अधिगम्य सम्पूर्णानन्द वि० वि०, रा० अध्यापनसंस्थाने च प्रवक्तृपदे, संस्कृतविद्यालयानां स० निरीक्षकपदे कार्यं सम्पाद्य अवकाशप्राप्तः। भाषाविमर्शः अस्माकमतीतः, कालिदासकाव्यामृतम्, संस्कृतसरणिः इत्यादीनि पुस्तकानि विरचितानि। एषु संस्कृतसरणिः उ० प्र० संस्कृताकादम्या पुरस्कृता। साम्प्रतमुत्तरप्रदेशीयसमितेर्महामन्त्री।

लख्नऊसुखनिवासकारिणां
प्राज्ञ-रामलखनाख्यशर्मणाम्।
गोमतीतटविहारलालिता
भाति काव्यकलना प्रयागगा॥

## समस्यापूर्तिः

पुष्पैराढ्यां बहुफलयुतां वाटिकां पक्षिकीर्णां
गोमत्यास्तां शिशिरशिशिरैः शीतलां शीतवातैः।
सज्जीभूतां सुरभितपटैः सेवितां नायिकाभिः
शीतच्छायां व्यथितपथिकः को विहातुं समर्थः॥१॥

देव्या वाचो नवकविवरैरागतैर्भारतीयैर्
विद्यापीठे ललितकवितापाठ आरभ्यमाणे।
दृष्ट्वा वाणीविलसितमिदं वर्तमानं पुरस्तात्
ज्ञातास्वादो मधुमयघटं को विहातुं समर्थः॥२॥



## प्रियं भारतं मे…

प्रियं भारतं मे प्रकामं प्रियं मे ।
विशालं ललामं समृद्धं जगत्यां,
सुधान्नं प्रभुक्तं जलं चास्य पीतम् ।
अनेनैव पुष्टं शरीरं मदीयं,
अनेनैव तुष्टं सकामं मनो मे । प्रियं भारतं मे

स्वतंत्रं धनाढ्यं प्रसिद्धं पुराणं,
जनानां बलेनैव पूर्णं निकामम् ।
अखण्डो नु हृद्योऽनुरागस्सुमातुः,
गृहीतो मया प्राणभूतस्ततो मे ॥ प्रियं भारतं मे

सुखं शैशवं सप्रमोदं व्यतीतम्,
सुखं यौवनं यत्र मोदेन नीतम् ।
स्वराष्ट्रं प्रकृष्टं सदोषं तथापि
गभीरा सुप्रीतिः सुरागस्सदा मे । प्रियं भारतं मे

चिरं भातु तावत् सुराष्ट्रं मदीयं,
यथाहं तदीयां सुसेवां करोमि ।
इदं जीवनं मे परं वा कदाचित्,
इदं स्यात् प्रसन्नं प्रकामं प्रियं मे । प्रियं भारते मे

# आर्तनादः

जानासि त्वं मनुजपशुभिः पीडितानां जनानां
दीनां हीनां मलिनमलिनां कान्तिहीनामवस्थाम् ।
शोकोद्भूतां व्यथितहृदये लुण्ठितानां जनानां
नित्यं नित्यं विपदि पतिते मानसे मानवानाम् ॥१॥

संसारेऽस्मिन् कुटिलमनसो दस्यवः सर्वदाऽऽसन्
येभ्यो भीतिः सुजनहृदये संस्थिता सर्वदाऽऽसीत् ।
तेषां नाशोऽक्रियत सततं किन्तु ते नैव नष्टा-
स्तेषां सत्ता जनयति सदा प्राणशंकां प्रकामम् ॥२॥

दस्युः सर्वं हरति सदनात् वर्तमाने समाजे
रक्षां कर्तुं विचरति परं सोऽपि कीदृक् करोति ।
न्यायाधीशो वितरति यथा न्यायमज्ञायि सर्वैः
शोको मेऽयं भवति विपुला दस्यवः सन्ति गेहे ॥३॥

ईहा का ते प्रथयति कथं सृष्टिकार्यं विधाता
भ्रष्टाचारा भुवि कथय किं सन्ति शिष्टा इदानीम् ।
भोः स्वामिन् नावतरसि कथं भीषणायां दशायां
सर्वे त्रस्ताः इह जगति ते प्राणिनः कालरात्रौ ॥४॥

नादं श्रुत्वा करुणजनकं पीडितानां जनानां
पापं दृष्ट्वा द्रवति न कथं मानसं ते दयालो ।
भारं हर्तुं त्रिभुवनगुरो धाव शीघ्रं धरायां
नष्टां भ्रष्टां कथमपि विभो पाहि तां स्वीयसृष्टिम् ॥५॥

## पुष्पवेदना

नूनं जातं मलिनमलिने पङ्किले दोषपूर्णे
धन्यस्तावत् परमपुरुषः पालकः पादपानाम् ।
यो मेऽयच्छन्नयनसुखदं शोभनं दिव्यरूपं
येनाहं वै बहुरुचिकरं लालितं बल्लरीभिः ॥१॥

क्लेशं हृत्वा वितरति सुखं सन्ततिर्मामकीना
मोदं दत्त्वा विलसति सदा स्वेच्छया सौम्यरूपा ।
लज्जाहीनः परमकुटिलो मानवस्तां लुनाति
कायं भित्त्वा हृदयदहनं दानवो मे ददाति ॥२॥

नित्यं नित्यं मधुरमधुरं तस्करो भृङ्गपादः
कामं कामं पिबति बहुधा दिव्यदिव्यं परागम् ।
क्षीणं क्षीणं भवति विकलं कोमलं मे शरीरं
कोऽयं शिष्टः प्रभवति तदा तस्य दण्डं प्रदातुम् ॥३॥

श्रेष्ठं श्रेष्ठं कथयति परं प्राणिनामात्मरूपं
स्वार्थं स्वार्थं मृगयति सदा मानवः स्वार्थरूपः ।
कोऽयं न्यायो भवति वितथो लुण्ठने लुण्ठकानां
त्राणं देयं जगति परमं रक्षकान्मादृशानाम् ॥४॥

## रामशरण शास्त्री

१९०८ तमे ई० संवत्सरे 'बाँदा' मण्डले लब्धजन्मानः 'कौमुदीकथाकल्लोलिनी'काराः, वैयाकरणधुरीणाः, ब्रह्मसूत्राणां विविधभाष्यसमीक्षाकाराः, वेदान्तचुञ्चुपाः, विविधसंस्कृतग्रन्थप्रणेतारः श्रीमन्तो (डॉ०) रामशरणत्रिपाठिशास्त्रिमहाभागाः उकनी (जौनपुर)-वाराणसी-राजिम (रायपुर)-ओरियन्टल कॉलेज (लवपुर)-प्रभृतिविद्याकेन्द्रेषु व्याकरणन्यायवेदान्तादिविविधविषयानधीत्य लवपुर-आगरा-मुरादाबादप्रभृतिनगराणां स्नातकोत्तरमहाविद्यालयेषु चाध्याप्य बहून् वैदुष्यजुषः शिष्यांश्च समुत्पाद्य स्वकीयजीवनस्य सान्ध्यवेलायां प्रयागे न्युषितवन्तः। विशेषेण प्रौढगद्यरचनास्वभिनिविष्टहृदया अपि यदा कदा प्रच्छन्नतयैव स्वान्तःसुखाय भगवतीभक्तिपरकाणि पद्यानि, बहून् प्रकीर्णश्लोकान् खण्डकाव्यानि च विरच्य तेषां प्रकाशने मन्दादराः सन्तः प्रयाग एव १९७७ तमे ई० वर्षे भगवत्सायुज्यमवापुः। अस्याः पुस्तिकाया वाङ्मुखत्वेन दत्तो वीणापाणेर्वन्दनरूपः श्लोक एतेषामेव।

यत्नसेवितसरस्वतीपदां
श्रील-रामशरणाख्यशास्त्रिणाम्।
सन्ततं भणितयः प्रमुद्भरे
रेजिरे हृदजिरे सचेतसाम्॥

## पितुः परिदेवनम्

मुम्बापुर्याः 'कम्बोज'नाम्ना पोतेन पयोधिपथेनाध्ययनार्थं विदेशं प्रस्थिते स्वकीये 'हिमांशु'नाम्नि पुत्रे वात्सल्यवशात् पुत्रस्नेहाभिभूतस्य

पितुस्तद्वियोगजनिता हार्दिकी वेदना चिन्ता च पद्येष्वेतेषु स्फुटीभवति। संस्कृतवाङ्मये सर्वथाऽपश्चिमोऽयं कश्चिद्वर्ण्यविषयः। अपूर्णस्यास्य खण्डकाव्यस्य कानिचिदाद्यानि पद्यानि स्थालीपुलाक-न्यायेन प्रस्तूयन्ते। प्रथमपद्यस्याद्यं पदं 'मातः' जगज्जनन्याः पराशक्तेः संबुद्धिरूपात्मकं मङ्गलमाविष्करोति।

मातस्त्वदीयतनुजो मनुजो हिमांशु-
र्देशे समापितनिजाध्ययनो यदाऽभूत्।
शर्मण्यदेशमित पंषिषिषुं तदा तं
लक्ष्मीतनूरनुगता सुतवत्सलत्वात् ॥१॥

मुम्बापुरेऽपरिचितोऽपचिते सुरेश-
जाया शयाशनसुखं परिकल्पयन्ती।
प्रास्थानिकाभ्युदयसद्वचनप्रयुक्त-
स्वस्त्यादिरर्पितधना सुमनास्त्वमेव ॥२॥

नैजानुजापादितमङ्गलार्चा-
ऽभिव्यक्तसद्भूतिललाटिकोऽसौ।
स्वीयेष्टदेवार्पितकार्यसिद्धि-
र्निध्यातसद्बुद्धिददिर्मुहूर्तम् ॥३॥

चित्रार्पितात्मजननीं मनसा प्रणत्य
कृष्णं शिवं भगवतीं जगदम्बिकां च।
प्रेष्ठो हिमांशुरथ पित्रनुजानुयातः
पारे पयोधिगमनाय निरैत्सहर्षम् ॥४॥

सन्मङ्गलोदग्रतरात्मशक्ति-
र्देवानुकम्पापरिबृंहितश्च ।
मुम्बापुरं प्राप्य पयोधितीरात्
स्वसुः पितुश्चापि निवृत्तिमैच्छत् ॥५॥

मञ्जूषिकादीनि सुरक्षितानि
ततोऽभवन्भूचरयानमध्ये ।
भृत्यैस्ततस्त्यैरथ यायिनश्च
सपद्यपद्यन्त पयोधितीरम् ॥६॥

शुल्कार्हवस्तूनि निरीक्षणाय
नीतानि सर्वाण्यधिशुल्कशालम् ।
व्रातीनवर्गोऽथ च पोतमध्ये-
ऽधिकारिभिः स्थापयितुं न्यदेशि ॥७॥

वियोक्ष्यमाणैस्तरसा गमिभ्यः
सोदर्यवर्यैः प्रियसौहृदैश्च ।
सम्बन्धिभिश्चाब्धितटस्तदानीं
पर्य्यावृतोऽदर्शि विलक्षमुद्रैः ॥८॥

पीत्वा कणेहत्य ततः प्रयातुं
मधुद्विरेफा इव तीरभाजाम् ।
नेत्रव्रजाः प्रेक्षितुमब्धिपोतं
कम्बोजमम्भोजमिवावरन्त ॥९॥

निर्दिष्टकालाय वियोक्ष्यमाणाः
प्रेष्ठाः प्रियैः खिन्नयुववीतचित्ताः ।
संरुद्धबाष्पोदयसन्नकण्ठाः
कृच्छ्रान्मिथोऽथैशत भाषितुं ते ॥१०॥

मध्येदिनं द्वादशनादकाले
पोतोऽध्वमीत्सूचयितुं गतिं स्वाम् ।
आशुप्रतिष्ठासुमतोऽध्यरुक्षन्
यियासवस्तं समुपेत्य बाह्याः ॥११॥

विद्याभिगृध्नुर्विहितप्रणामो
गाम्भीर्यमब्धेस्तिरयन् स्वकेन ।
पित्राशिरावर्जितभालभारी
सोपानमार्गेण गतोऽधिपोतम् ॥१२॥

तटानुलग्नानपि रज्जुबन्धान्
पोतप्लवा मोक्तुमथारभन्त ।
क्रमेण पोतं समदृश्यताग्रे
तीरं जहच्च प्लवमानमब्धौ ॥१३॥

अम्भोजमासाद्य हिमांशुरश्मीन्
किं श्वेतपत्रं निशि यद्विभाति ।
कम्बोजमावेश्य हिमांशुमन्त-
र्भास्यामि नक्तंदिवमित्यगर्वत् ॥१४॥

क्षणेन दूरं प्रवहत्पयोधौ
तच्छ्वेतपत्रं स्वपथाभिमुख्यम् ।
गृह्णत्, तटस्थान् प्रतियापयच्चा-
भासीदिवाब्ध्युच्चतरङ्गहस्तैः ॥१५॥

विदूरितालोकनलालसास्ते
यथागतं गन्तुमथारभन्त ।
परोक्षवृत्तीनपि च प्रियान् स्वा-
नालोकमाना मनसाऽनुगेहम् ॥१६॥

कृच्छ्रेण संस्तम्भितनेत्रबाष्पो-
ऽमाङ्गल्यभीरुः प्रणयावनद्धः ।
शोकेन शुष्यन्मुखहृत्सरोजो
हिमांशुहीनाम्बरशून्यचेताः ॥१७॥

पिता हिमांशोरपि कष्टकष्टं
प्रियात्मजं प्रेष्य दविष्ठदेशम् ।
तदीयपार्थक्यनिगूढदुःखः
स्वावासमायात् सकनिष्ठकन्यः ॥१८॥

गृहे सुरेशस्य हिमांशुयुक्ते
राकेव याऽह्नाय सुहासिताऽगात् ।
तस्मिंस्तदानीं खलु तद्वियुक्ते
कृच्छ्रं निशान्तेऽपि निशान्तमायात् ॥१९॥

प्रातः परेद्युः कृतनित्यकृत्यो
मुम्बापुरात् प्रस्थितिमाशु कृत्वा ।
क्षेपिष्ठगन्त्र्या समतन् मुरादा-
बादं पुनः प्रापदहर्द्वयेन ॥२०॥

मध्यात्मजः खड्गपुराय पूर्वं
प्रातिष्ठिपत् स्वाध्ययनाय तत्र ।
ज्येष्ठे विदेशं प्रगतेऽद्य शून्यं
गृहं तदेवात्तुमिवान्वधावत् ॥२१॥

गृहं तदेवाविकृतस्वरूपं
तान्येव कोष्ठानि सुसंभृतानि ।
सर्वं यथापूर्वमथापि तत्र
शान्त्यै हृदोऽजायत नास्य किञ्चित् ॥२२॥

तमेव तत्रानिशमन्वशोचत्
सोऽश्नन् पिबन् केन सहापि जल्पन् ।
क्व प्रातराशं विदधीत कुत्रा-
श्नीयाच्छयीताद्य कियद्गतः स्यात् ॥२३॥

आशैशवाद् यो ममपार्श्वशायी
शिष्यः सखोत्कृष्टनिदेशकारी ।
नीडाद् बहिः शावकवत् स नूनं
तत्र स्मरेत् सर्वमिहत्यमेकः ॥२४॥

कम्बोजमारुह्य पुरः प्रसर्पन्
स्वचेतसा नूनमिह प्रतीयात् ।
वियुक्तिदुःखानुभवानभिज्ञो
ह्यस्मादकस्मात् प्रगतो विदेशम् ॥२५॥

अस्मद्वियोगेन यदा विदूनः
शयिष्यते नूनमथाप्यभुक्तः ।
मदाप्तवात्सल्यमहो तदानीं
भोक्तुं प्रियं तं प्रतिबोधयेत् कः ? ॥२६॥

आशैशवाद् यो जननीवियुक्तो-
ऽपि न क्षणं मेऽक्षिबहिष्कृतोऽभूत् ।
स कोशलक्षान्तरदेशमद्य
चिराय मामत्र विहाय यातः ॥२७॥

जनिर्यदाभूद्गृहकार्यलग्ना
स्वोत्सङ्गमारोप्य शिशुं यदेनम् ।
भ्राम्यन् प्रकोष्ठं परितस्तदानी-
मशीशयं तत्समयं स्मरामि ॥२८॥

को वा तदानीमचिचिन्तदित्थं
हिमांशुरेवैष उदीयमानः ।
स्ववैदुषीचन्द्रिकयाऽधिवेलं
प्राचीं प्रतीच्या सह योक्ष्यतीति ॥२९॥

(अपूर्णम्)

• • •

जगन्नाथपाठक-विरचितं मुक्तकं काव्यं

# कापिशायनी

'विद्यापीठेन' प्रकाशितं काव्यमिदमाकलय्य कतिपयैः सहृदयैर्विद्वद्भिश्च स्वकीयो विचारः पत्रद्वारा प्रेषितः। प्राप्तेषु पत्रेष्वस्ति राजस्थानशासनस्य भाषा-निदेशालये निदेशकपदमलङ्कुर्वतां महाकविभट्टमथुरानाथशास्त्रितनूजनुषां पौरस्त्यपाश्चात्यसाहित्याकलनपटीयसां श्रीकलानाथशास्त्रिणां पत्रम् । तदिह हिन्दीभाषायां लिखितमत्र किञ्चित् संक्षिप्य समुद्ध्रियते—

"'डा० पाठक के गम्भीर, दृढ़ और प्रौढ़ दार्शनिक व्यक्तित्व के पीछे एक सुकुमार रसिक और संवेदनशील कवि का हृदय छिपा हुआ है यह इस काव्य के अध्ययन से स्पष्ट होता है। इसमें प्राचीन कवियों की सी ललित शैली और आधुनिक कवियों का सा संवेदन और सौन्दर्यबोध, दोनों का सुखद संयोग है। डा० पाठक का काव्य अपने समान नाम वाले जगन्नाथ पण्डितराज की शैली, उमर ख़ैयाम की जीवन-दृष्टि, मधुशाला के प्रणेता डा० बच्चन की संवेदना तथा कालिदास जैसे कालजयी कवियों की शब्दशय्या के सम्मिलित प्रभावों से ढला लगता है।

उमर ख़ैयाम की तरह वह भी "भवितासि मृदेव वा" कह कर क्षणिक जीवन में रहस्यात्मक मधुशाला भोगना चाहता है, प्राचीन कवियों की तरह वियोगिनी छन्द का प्रयोग करके मानस में सुकुमार संवेदन पैदा करना चाहता है और पण्डितराज की सी शिखरिणी लिखता है। "का नाम भवती" इस तन्तु पर आधृत शिखरिणी छंद मनोहारी बन पड़े हैं। पण्डितराज के जीवन की एक झलक भी प्रभावी बन पड़ी है।

ऐसी काव्य-रचना संस्कृत कवियों की जागरूक सौन्दर्यानुभूति का प्रशंसनीय प्रतीक है।'"

कलानाथ शास्त्री